विद्वद्वरश्रीमदिन्दुकरात्मज ब्राह्मणवंशज—
श्रीमाधवकर संगृहीतम्—

# माधवनिदानम्

( गुटका )

मूलमात्रम् ।

आयुर्वेद महामहोपाध्यायेन रसायनशास्त्रिणा-
ह्यायुर्वेदाचार्येण भागीरथेन स्वामिना
सम्पादितम् ।

# MADHAVA NIDANAM.

BY

PT. MADHAVAKRA,

EDITED BY

AYURBED MAHAMAHOPADHYAYA
Rasayana Shastri Bhagiratha Swami.

मूल्यं ।।) आणका: ] सन् १९३७ [ *Price* [redacted].

# निदान-विषय-सूची-पत्रम् ।

## पूर्वार्द्धम् ।

संख्याः विषयाः पृष्ठांकाः



——

# उत्तरार्द्धम्

——

# अथ परिशिष्टसूचिः

———

॥ श्रीधन्वन्तरये नमः ॥

# श्रीमाधवनिदानस्य भूमिका

श्रीमन्तः प्राणाचार्य्याः

जानन्ति भवन्त स्ससम्प्रत्ययञ्जन निदान, माधवनिदान हंसराजनिदान निदानदीपिकादि बहूनि निदानानि लभ्यन्ते। तेषु निदानदीपिकया माधवनिदानेन विना मुनि प्रणीतानि ग्रन्थस्थानि वाक्यानि नोल्लिखितानि सन्ति। सम्प्रति निदानदीपिकातु रोग परीक्षणे माधवनिदान तोऽपि श्रेष्ठतरा वर्तते; परन्तु सा व्याख्यानरहिता यत्र तत्र लभ्यते। तथापि तत्पठनपाठन पद्धति प्रचारो र्न विद्यतेऽधुना प्रचारस्तु माधवनिदानस्यैव।

प्राणाचार्य्येणेन्दुकरात्मजेन माधवकरेण रोगविनिश्चयात्मकं चरक सुश्रुत वाग्भट विदेहादि प्राचीना-

चार्य्यवचन समूहं माधवनिदानं विरचितमासीत्। अस्मिन्नायुर्वेदोक्तानां प्रायः ज्वरादीनां सर्वेषां रोगाणां निदानपूर्वरूप रूपोपशय सम्प्राप्त्युपद्रवसाध्यासाध्य कृच्छ्र साध्ययाप्यविचार प्रभृतयो विषया संक्षेपेणातिस्पष्टतया सुवर्णिताः।

अयञ्च मन्द बुद्धीनामल्पेनापि परिश्रमेण रोगसमूहज्ञानसम्पादनविधावद्वितीयो वरीवर्ति भिषजामतीवोकारकः। चिकित्सकाः यदीमं सर्वदा कण्ठोपस्थितमेव परिरक्षन्ति तदा रोगाणां पूर्णज्ञान प्राप्तिर्भविष्यत्येव नास्मिन्सन्देहलेशावसरः। अस्यमहत्तां परोपकारताञ्च स्मारं स्मारं वह्वयष्टीका विरचितासद्भिः परन्तु सुस्पष्टतया न ज्ञायते माधवनिदानकर्ता माधवकरः कस्यां जातौ कस्मिन् स्थाने प्रादुरासीदयमिति।

अत्र श्रीगोपी मोहन कविराज कृत मुक्तावल्याख्य ग्रन्थस्थेन पूर्वं लोकहिताय माधवकरोऽभिज्ञो भिषक् केवलं। कोषान्वेषण तत्परः प्रविततायुर्वेद रत्नाकरात्।

मालां रत्नमयीश्चकार सयथा लाभं न शोभाधिका।
सास्माभिः कमनीय भक्ति रचना द्वाराऽन्यथा ग्रन्थ्यते।"
एतेन पद्येन निश्चीयते रत्नमालाभिधं माधवनिदानातिरिक्तमपरं ग्रन्थमपि रचितवान् माधवकरः।

अस्मिन् विषये महामहोपाध्यायस्य कविराजस्य गणनाथसेन सरस्वती महोदयस्य प्रत्यक्ष शरीरोपोद्घात प्रकरणे स्पष्टं ज्ञायते निदानकारो माधवकरो वङ्गेषु प्रादुरभूदिति किंवदन्ती। कर इत्युपाधिश्चास्य वङ्गीयतां स्फुटं व्यनक्ति। सच वाग्भटावरजः, निदाने, निदानं पूर्वरूपाणि—इत्यादि, तत्प्रकोपस्यतु प्रोक्तं विवधाहित सेवनमित्यत्र कस्य समग्र सन्दर्भस्य तथान्येषां वाग्भट पद्यानां बहुधा ग्रहणात्। वृन्द चक्रपाण्योः पूर्वजश्चसः। ताभ्यां कृतयोस्स्व चिकित्सा संग्रहयोः, गदविनिश्चयोक्त क्रमेण चिकित्सोपदेशात्।

चक्रपाणिश्च ख्रिस्तीयैकादश शतक मध्यभागे वङ्गभूमिमलञ्चकारेति सहेतुकमवोचामः। सच वृन्दकृत

सिद्धयोगात् स्वग्रन्थमुपजीव्य स्वकीयं चिकित्सासंग्रहं रचयाम्बभूवेति तदुक्त्या चक्रपाणेरन्यून वर्षशतद्वयेन प्राक्तनस्स्याद् वृन्दः ।" तेनासौ वृन्दाचार्य्यो नवम शतकेऽभूदित्युन्नीयते ।

माधवश्च तत्पूर्वजः ख्रीस्तीय सप्तम शतके सम्बभूवेतिसम्भाव्यते । इतश्चाष्टम शतके "हरूण डल रसीद" समये माधवनिदानस्य पारस्य भाषानुवादोऽभूदित्यैतिहासिक वार्तयापि तत्पूर्वज एव माधवः पर्य्यवस्यति । तस्माद् वाग्भट परिवर्तित्वात् सप्तशतके किञ्चित्पूर्वंवा माधव प्रादुर्भावः सिध्यति । माधवकरश्चासौ संगविनिश्चयाख्य निदानग्रन्थप्रणेता रत्नमालाख्य ग्रन्थकारश्चेति प्रसिद्धिः । डह्लणादि निर्दिष्टः सुश्रुत टिप्पणकारश्श्रीमाधवो भिन्न एवास्मात् प्रतिभातितस्य कुत्रापि माधवकर इति निर्देशादर्शनात् । सायण माधवस्तु भिन्न एव । वेद भाष्यकृन्माधवाचार्य्यो वर्षपञ्चशत तदवरजश्चेति तयोरभेदः कथमपि न शङ्कनीयः ।

अत्रास्माकं विचारः ।। कविराजमहानुभावेन माधव-करस्यजनिः—बङ्गदेशे सम्पादिता । करशब्देन बङ्गदेशे कायस्थानां ग्रहणं । करा वंगदेशजा इति हेतुश्चात्र कविराज गोपीमोहन कृतामुक्तावलिर्माधवकरकृत रत्न-माला बचनानि समाहृत्य विरचितेति । तथा करोपाधि-श्च बङ्गदेशोत्पत्तिं प्रकटयति तन्न तत्र देशकालवर्ण प्रमाणाभावात् । तथा माधवकर इत्यत्र कर्तुरभिप्रायाच्चेति नकर कृतमितिध्वन्यते । एव मितिहासाभावादपि न जाति र्न बङ्ग देशःअस्यजनक इन्दुकरोऽङ्कितः कराख्या समयस्तु यथोक्त एव ज्ञायते । प्रारम्भे प्रणम्य जगदुत्पत्ति स्थिति संहारकारणं । स्वर्गापवर्गयोर्द्वारं त्रैलोक्य शरणं शिवम् । नाना मुनीनाम्बचनैरिदानीं समासतस्सद् भिषजां नियोगात् । सोपद्रवारिष्टनिदान लिङ्गो निबध्यते रोग विनिश्चयोऽयम् । द्वाभ्यां पद्याभ्यां माधवश्शिवभक्तः विद्वद्वराग्रगण्यः स्तथायुर्वेदशास्त्र महोदधितो नाना मुनीनां बचनानिसमाहृत्य समासत

निदानकरणाय नियुक्तोऽपि कथ्यते च नियुक्तत्वाधिकार एवंच ब्राह्मणानां नान्येषां चरकादि प्रमाणाच्चेति। ममसतेतुडह्लणादि निर्दिष्टस्सुश्रुतटिप्पणकारः सएव निदानकर्ता माधवः। टिप्पणकरण समये निदान रचना करत्वं न सूचितम्। वेदभाष्य कारस्सायणो माधवोऽन्यएव तथा निदानकारो भिन्नः।

इतिहासस्त्वयं माधव कर जनि समये वङ्ग देशे ह्यायुर्वेद पठन पाठन पद्धतिरपि विशेषान बभूव तथेदृशी विद्वद्वती बङ्ग भूमिर पिन जाता। विद्या प्रचारस्तु बल्लालसेन समयत एव बल्लालसेनेनैव बङ्ग भूपतिना यज्ञकृति विधानायाहूता.कान्यकुब्ज ब्राह्मणाः स्तदनुसारिण अन्येऽपोति। बल्लालसेन समयात्पूर्वं माहिष्य क्षत्रिया राजपूता नातस्समागत्य वाङ्गान्विजित्य ॥ राज्यचक्रुः। तस्मिन्नेवावसर आदिगौडागुरवो ब्राह्मणा स्तैस्साद्धं वङ्ग भूमि मलंकृत्य प्रधान मन्त्रित्वं प्राप्तवन्त आसन्। एवं सर्वेषु राजकार्येषु धर्मकार्येषु च

प्रधानत्वंतेषां जातम् । तेनैवकारणेन वंगदेशो गौड नाम्ना प्रसिद्धः । इदन्तु सत्यमेव मिथिलादेश सोत्कल देशश्च संस्कृतविद्या यां सूर्य्य आसीत् किल। तथौत्कलदेशे करा ब्राह्मणा भवन्ति तेन माधवकरस्य उत्कलदेशीय त्वमेव सूच्यते। रसमाधवकर्ताऽपि कश्चि-न्माधव एव सोऽपि निदानकारः। अत्र विशेषःआयुर्वेदस्य मद्रदेशे हियादृशी चोत्तमा सम्पूर्ण विधानवती सद्यः फलदात्री चिकित्सा। तथा धातु भस्म रसकरण पद्धतिः सर्वोत्तमाप्रचलति । तत्र सिद्धसम्प्रदाये सचिकित्सं माधवनिदानं लभ्यते। राज्ञः पाण्डोर्माद्री ( मद्रराज-कन्या ) राज्ञोवभूव तस्या नकुल सहदेवौ पुत्रौ जातौ तत्समरतांजनानां रोगजालनाशकत्वंञ्च च प्रदर्शितम् ।' माद्रीसुतौ कथयतां नभवन्तिरोगाः। इति द्वौ पुत्रावश्वि नी कुमारावतारौ प्रसिद्धौ मद्रदेशाधिपति मातामह गेह निवास प्रभावादायुर्वेदावतारौ । मद्रराज्ये सचिकित्सं माधवनिदानं विद्यते। परन्त्वन्यदेशेषु न दृश्यते तस्य-

कारणं न्त्विदमेव। निदान विभाग श्चिकित्सा विभागश्च माधवेन रचितस्तयोर्निदानं सर्वैरन्यदेशजैः प्राप्तं सचिकित्सं माधवनिदानं मद्रदेशजैर्वैद्यैः प्राप्तं। तत्प्रमाणं सिद्धसम्प्रदाय प्रधान ग्रन्थे वसवराजीये द्रष्टव्यम्। वसवराजीयो ग्रन्थः श्रीमद्गोवर्द्धन छागाणी सकाशात् सीतावर्डी नागपुरतो लभ्यते। तस्यनिदानं सचिकित्साचातीव सद्यः फलदात्री साम्प्रतं प्रचलितस्य सिद्धसम्प्रदायोक्तस्य माधवनिदानस्य पद्यानि समानानि। कुत्र कुत्र चिद्विशेषत्वं पाठभेदश्च दृश्यते। चिकित्सायांतुविशेषत्वं विद्यत एव। अत्रकेषाचिन्मतं समाधवो ह्यन्यः। केचिद् वदन्ति महाराष्ट्रजम् कैश्चिच्छि। व भक्त आदि गौड ब्रह्मण कुल जो जयपुर प्रान्त निवासी कश्चिन्माधवः काशीस्थो मन्यते। इत्यादि द्यनेक जन श्रुतयो विद्यन्ते प्रमाणाभावान्नगृहीतव्यम्। सिद्धान्तेतूत्कलदेशज एव।

तत्कृतमेव मूलमात्रं माधवनिदानं बहून्युत्तमोत्तमानि

पुस्तकानि दृष्ट्वा छात्राणां हिताय प्रकाश्यते जयगोपाल श्रीनिवास महाशयाभ्यां श्रेष्ठिभ्यां मुम्बई पुस्तक एजेन्सीस्वामिभ्याम् । अस्मिन् रोगाणां संस्कृत अंगरेजी भाषायां नामानि दत्तानि तेनायुर्वेद छात्राणां पठन पाठनयोरुपकार करम्भविता ।

यदि वैद्यानामिच्छा धन्वन्तरेर्भगवतः कृपाभूयात्तदा सचिकित्सं माधवनिदानं कस्मिश्चित्समये भवतां दृष्टि पथे समागमिष्यति साम्प्रतन्तु सचित्रं संदिग्ध निर्णयनामक बनौषध शास्त्रं हिन्दी भाषायां इङ्गलिश भाषायाञ्च प्रकाश्यते तदूदृष्टव्यम्

भवतांकृपापात्रः सन्दिग्ध निर्णय बनौषधशास्त्रकारः—

आयुर्वेद महामहोपाध्यायः

रसायन शास्त्री—

भागीरथ स्वामी आयुर्वेदाचार्य्यः

१४३, हरिसनरोड, कलकत्ता ।

अथवा चित्तरंजन एभिन्यु ( ६२, मुक्ताराम बाबू स्ट्रीट )

कलकत्ता ।

※ श्रीहरिश्शरणम् ※

# मूलं

# माधवनिदानम् ।

लेखक—मङ्गलाचरणम्—

स्वेष्टदेवं श्रीनृसिंहं धन्वन्तरि महर्निशम् ।
हृदयेच हनूमन्तं पितरं मातरन्तथा[१] ॥१॥
विद्या[२] गुरून्नमस्कृत्य सर्वशास्त्रार्थ पारगान् ।
आयुर्वेद महामहोपाध्येनसदामया ॥२॥

---

फरूखाबदस्थ

१ कुशालीम् । २ याज्ञिक मनसाराम माधवाचार्य्य जयदेव देवकरण-श्रीनृसिंहदत्त ज्योतिर्विज्ञानकरामादीन् ।

पुस्तकानि दृष्ट्वा छात्राणां हिताय प्रकाश्यते जयगोपाल श्रीनिवास महाशयाभ्यां श्रेष्ठिभ्यां मुम्बई पुस्तक एजेन्सीस्वामिभ्याम् । अस्मिन् रोगाणां संस्कृत अंगरेजी भाषायां नामानि दत्तानि तेनायुर्वेद छात्राणां पठन पाठनयोरुपकार करम्भविता ।

यदि वैद्यानामिच्छा धन्वन्तरेर्भगवतः कृपाभूयात्तदा सचिकित्सं माधवनिदानं कस्मिश्चित्समये भवतां दृष्टि पथे समागमिष्यति साम्प्रतन्तु सचित्रं संदिग्ध निर्णयनामक बनौषध शास्त्रं हिन्दी भाषायां इङ्गलिश भाषायाञ्च प्रकाश्यते तद्दृष्टव्यम्

भवतांकृपापात्रः सन्दिग्ध निर्णय बनौषधशास्त्रकारः—

**आयुर्वेद महामहोपाध्यायः**

रसायन शास्त्री—

**भागीरथ स्वामी आयुर्वेदाचार्यः**

१४३, हरिसनरोड, कलकत्ता।

अथवा चित्तरंजन एभिन्यु ( ६२, मुक्ताराम बाबू स्ट्रीट ) कलकत्ता।

※ श्रीहरिश्शरणम् ※

मूलं

# माधवनिदानम् ।

लेखक—मङ्गलाचरणम्—

स्वेष्टदेवं श्रीनृसिंहं धन्वन्तरि मर्हनिशम् ।
हृदयेच हनूमन्तं पितरं मातरन्तथा[१] ॥१॥
विद्या[२] गुरून्नमस्कृत्य सर्वशास्त्रार्थ पारगान् ।
आयुर्वेद महामहोपाध्येनसदामया ॥२॥

---

फर्रुखाबदस्थ

१ कुशालीम् । २ याज्ञिक मनसाराम माधवाचार्य्य जयदेव देवकरण-श्रीनृसिंहदत्त ज्योतिर्विज्ञानकरामादीन् ।

छात्राणां श्रेयसेह्यायुर्वेदाचर्य्येण स्वामिना ।
रसायनशास्त्रिणा भागीरथेन[३] सम्प्रकाक्ष्यते ॥३॥
सुखम्पठन्तु कण्ठस्थ कृत्यैच लघुपुस्तकम् ।
पाठयन्तु च वानित्यं छात्राः पण्डित पण्डिताः ॥४॥

---

३ जयपुर राज्यान्तर्गत भामोद ग्राम निवासिना स्वामि हनमत्पुत्रेण तथा फरूखाबाद परदेश निवासिना सम्प्रति कलकत्ता परदेश निवासिना ।

## श्रीग्रन्थकार-कृत-मंगलाचरणम् ।

प्रणम्य जगदुत्पत्ति-स्थिति-संहार-कारणम् ।
स्वर्गाऽपवर्गयोर्द्वारं त्रैलोक्य-शरणं शिवम् ॥१॥

### ग्रन्थस्य अभिधेयमाह ।

नानामुनीनां वचनैरिदानीं
समासतः सद्भिषजां नियोगात् ।
सोपद्रवारिष्ट-निदान-लिङ्गो

निबध्यते रोगविनिश्चयोऽयम् ॥ २ ॥

प्रयोजनम्—नानातन्त्रविहीनानां भिषजामल्पमेधसाम् ।
सुखं विज्ञातुमातङ्कमयमेव भविष्यति ॥ ३ ॥

## अथ निदानादि-पञ्चकम् ।

निदानं पूर्वरूपाणि रूपाण्युपशयस्तथा ।
सम्प्राप्तिश्चेति विज्ञानं रोगाणां पञ्चधा स्मृतम् ॥४॥

निदानमाह—( जायते जन्म रोगाणां येन केनापि हेतुना ।
प्रकोपश्चापि दोषाणां, निदानं तद्विदुर्बुधाः ॥ )
निमित्तहेत्वाऽऽयतनप्रत्ययोत्थानकारणैः ।
निदानमाहुः पर्य्यायैः.................... ॥ ५ ॥

पूर्वरूपमाह—............प्राग्रूपं येन लक्ष्यते ।
उत्पित्सुरामयो दोष-विशेषेणाऽनधिष्ठितः ।
लिङ्गमव्यक्तमल्पत्वाद्व्याधीनां तद्यथायथम् ॥ ६ ॥

रूपम्—तदेव व्यक्ततां यातं रूपमित्यभिधीयते ।
संस्थानं व्यञ्जनं लिङ्गं लक्षणं चिह्नमाकृतिः ॥ ७ ॥

उपशयमाह—

हेतु-व्याधि-विपर्य्यस्त-विपर्य्यस्तार्थकारिणाम् ।

औषधान्न-विहाराणामुपयोगं सुखावहम् ।। ८ ।।

विद्यादुपशयं व्याधेः स हि सात्म्यमिति स्मृतः ।

अनुपशयमाह—

विपरीतोऽनुपशयो व्याध्यसात्म्याभिसंज्ञितः ।।९।।

सम्प्राप्तिमाह—यथा दुष्टेन दोषेण यथा चानुविसर्पता ।

निर्वृत्तिरामयस्याऽसौ संप्राप्तिर्जातिरागतिः ।।१०।।

सम्प्राप्तिभेदाः—संख्याविकल्पप्राधान्यबलकालविशेषतः ।

सा भिद्यते यथाऽत्रैव वक्ष्यन्तेऽष्टौ ज्वरा इति ।।११।।

विकल्पमाह—

दोषाणां समवेतानां विकल्पोंऽशांश-कल्पना ।

प्राधान्यमाह—

स्वातन्त्र्यपारतन्त्र्याभ्यां व्याधेः प्राधान्यमादिशेत् १२

बलमाह—हेत्वादिकात्स्न्यावयवैर्बलाबलविशेषणम् ।

कालमाह—नक्तंदिनर्तुभुक्तांशैर्व्याधिकालो यथामलम् ।।१३।।

इति प्रोक्तो निदानार्थःसव्यासेनोपदेक्ष्यते ।

इदानीं निजव्याधीनां दोषाणां च निदानं ब्रवीति—

निजनामेव रोगाणां निदानं कुपिता मलाः ।। १४ ।।

तत्प्रकोपस्य चागन्तोर्विविधाहितसेवनम् ।

इदानीमन्यत्रापि निदानार्थकरतां दर्शयति चरकीयवचनेन—

निदानार्थकरो रोगो रोगस्याप्युपजायते ॥१५॥
तद्यथा ज्वरसन्तापाद्रक्तपित्तमुदीर्यते ।
रक्तपित्ताज्ज्वरस्ताभ्यां शोषश्चाप्युपजायते ॥१६॥
प्लीहाभिवृद्ध्या जठरं जठराच्छोथ एव च ।
अर्शोभ्यो जाठरं दुःखं गुल्मश्चाप्युपजायते ॥१७॥
( दिवास्वापादिदोषैश्च प्रतिश्यायश्च जायते )
प्रतिश्यायादथः कासः कासात्संजायते क्षयः ।
क्षयो रोगस्य हेतुत्वे शोषस्याप्युपजायते ॥ १८ ॥
ते पूर्वं केवला रोगाः पश्चाद्धेत्वर्थकारिणः ।
कश्चिद्धि रोगो रोगस्य हेतुर्भूत्वा प्रशाम्यति ॥१९॥
न प्रशाम्यति चाप्यन्यो हेतुत्वं कुरुतेऽपि च ।
एवं कृच्छ्रतमा नृणां दृश्यन्ते व्याधिसंकराः ॥२०॥
तस्माद् यत्नेन सद्वैद्यैरिच्छद्भिः सिद्धिमुद्धताम् ।
ज्ञातव्यो वक्ष्यते योऽयं ज्वरादीनां विनिश्चयः ॥२१॥

इति श्रीमाधवकरविरचिते माधवनिदाने
पञ्चलक्षणनिदानं समाप्तम् ॥

———

# अथ ज्वरनिदानम् ।

ज्वरमूलहेतुः—दक्षापमान-संक्रुद्ध-रुद्र-निःश्वास-संभवः ।
तत्संख्या—ज्वरोऽष्टधा पृथग्द्वन्द्वसंघातागन्तुजः स्मृतः ॥१

ज्वरसम्प्राप्तिः—

मिथ्याहारविहाराभ्यां दोषा ह्यामाशयाश्रयाः ।
बहिर्निरस्य कोष्ठाग्निं ज्वरदाः स्यू रसानुगाः ॥२॥

सामान्यज्वरलक्षणं—

स्वेदावरोधः संतापः सर्वाङ्गग्रहणं तथा ।
युगपद्यत्र रोगे च स ज्वरो व्यपदिश्यते ॥३॥

सामान्यं ज्वरपूर्वरूपं—

श्रमोऽरतिर्विवर्णत्वं वैरस्यं नयनप्लवः ।
इच्छाद्वेषौ मुहुश्चापि शीतवातातपादिषु ॥४॥
जृम्भाऽङ्गमर्दो गुरुता रोमहर्षोऽरुचिस्तमः ।
अप्रहर्षश्च शीतं च भवत्युत्पत्स्यति ज्वरे ॥५॥
सामान्यतः,.............................॥

विशेषपूर्वरूपं—...विशेषात्तु जृम्भाऽत्यर्थं समीरणात् ।
पित्तान्नयनयोर्दाहः कफादन्नारुचिर्भवेत् ॥ ६ ॥

सन्निपातपूर्वरूपं—सर्वलिङ्गसमूहश्च सर्वदोषप्रकोपजे ।

द्वन्द्वजपूर्वरूपं—रूपैरन्यतराभ्यां तु संसृष्टैर्द्वन्द्वजं विदुः ॥७॥

वातज्वररूपं—वेपथुर्विषमो वेगः कण्ठौष्ठपरिशोषणम् ।
निद्रानाशः क्षवस्तम्भो गात्राणां रौक्ष्यमेव च ॥८॥
शिरोहृद्गात्ररुग्वक्त्रवैरस्यं गाढविट्कता ।
शूलाध्माने जृम्भणं च भवन्त्यनिलजे ज्वरे ॥ ९॥

पित्तज्वररूपं—

वेगस्तीक्ष्णोऽतिसारश्च निद्राल्पत्वं तथा वमिः ।
कण्ठौष्ठमुखनासानां पाकः स्वेदश्च जायते ॥ १० ॥
प्रलापो वक्त्रकटुता मूर्च्छा दाहो मदस्तृषा ।
पीतविण्मूत्रनेत्रत्वं पैत्तिके भ्रम एव च ॥ ११ ॥

कफज्वररूपम्—

स्तमित्यं स्तिमितो वेग आलस्यं मधुरास्यता ।
शुक्लमूत्रपुरीषत्वं स्तम्भस्तृप्तिरथापि च ॥ १२ ॥
( नात्युष्णगात्रता छर्दिरङ्गसादोऽविपाकिता । )
गौरवं शीतमुत्क्लेदो रोमहर्षोऽतिनिद्रता ॥ १३ ॥
प्रतिश्यायोऽरुचिः कासः कफजेऽक्ष्णोश्च शुक्लता ।

वातपित्तज्वररूपं—

तृष्णा मूर्च्छा भ्रमो दाहः स्वप्ननाशः शिरोरुजा ।

कण्ठास्यशोषो वमथू रोमहर्षोऽरुचिस्तमः ॥ १४ ॥
पर्वभेदश्च जृम्भा च वातपित्तज्वराकृतिः ।

वातकफज्वररूपं—

स्तैमित्यं पर्वणां भेदो निद्रागौरवमेव च ॥ १५ ॥
शिरोग्रहः प्रतिश्यायः कासः स्वेदाऽप्रवर्तनम् ।
संतापो मध्यवेगश्च वातश्लेष्मज्वराकृतिः ॥ १६ ॥

पित्तकफज्वररूपं—

लिप्ततिक्तास्यता तन्द्रा मोहः कासोऽरुचिस्तृषा ।
मुहुर्दाहो मुहुः शीतं पित्तश्लेष्मज्वराकृतिः ॥ १७ ॥

सन्निपातज्वररूपं—

क्षणे दाहः क्षणे शीतमस्थिसन्धिशिरोरुजा ।
सास्रावे कलुषे रक्ते निर्भुग्ने चापि लोचने ॥ १८ ॥
सस्वनौ सरुजौ कर्णौ कण्ठः शूकैरिवावृतः ।
तन्द्रा मोहः प्रलापश्च कासः श्वासोऽरुचिर्भ्रमः ॥१९
परिदग्धा खरस्पर्शा जिह्वा स्रस्ताङ्गता परम् ।
ष्ठीवनं रक्तपित्तस्य कफेनोन्मिश्रितस्य च ॥ २० ॥
शिरसो लोठनं तृष्णा निद्रानाशो हृदि व्यथा ।
स्वेदमूत्रपुरीषाणां चिराद्दर्शनमल्पशः ॥ २१ ॥

कृशत्वं नातिगात्राणां प्रततं कण्ठकूजनम् ।
कोठानां श्यावरक्तानां मण्डलानां च दर्शनम् ॥२२॥
मूकत्वं स्रोतसां पाको गुरुत्वमुदरस्य च ।
चिरात्पाकश्च दोषाणां सन्निपातज्वराकृतिः ॥२३॥
दोषे विबद्धे नष्टेऽग्नौ सर्वसम्पूर्णलक्षणः ।
सन्निपातज्वरोऽसाध्यः, कृच्छ्रसाध्यस्ततोऽन्यथा ।
सन्निपातमर्य्यादा—सप्तमे दिवसे प्राप्ते दशमे द्वादशेऽपिवा ।
पुनर्घोरतरो भूत्वा प्रशमं याति हन्ति वा ॥ २५ ॥

तद्द्विगुणा मर्य्यादा च—

सप्तमी द्विगुणा चैव नवम्येकादशी तथा ।
एषा त्रिदोषमर्य्यादा मोक्षाय च वधाय च ॥२६॥
कर्णमूलशोथमाह-सन्निपातज्वरस्यान्ते कर्णमूले सुदारुणः
शोथः संजायते तेन कश्चिदेव प्रमुच्यते ॥ २७ ॥

अभिन्यासज्वरमाह—

त्रयः प्रकुपिता दोषा उरःस्रोतोऽनुगामिनः ।
आमाभिवृद्ध्या ग्रथिता बुद्धीन्द्रियमनोगताः ॥२८॥
जनयन्ति महाघोरमभिन्यासं स्वरं दृढम् ।
श्रुतौ नेत्रे प्रसुप्तिः स्यान्न चेष्टां कांचिदीहते ॥२९॥

नच दृष्टिर्भवेत्तस्य समर्था रूपदर्शने ।
न घ्राणं न च संस्पर्शं शब्दं वा नैव बुध्यते ॥३०॥
शिरो लोठयतेऽभीक्ष्णमाहारं नाभिनन्दति ।
कूजति तुद्यते चैव परिवर्तनमीहते ॥ ३१ ॥
अल्पं प्रभाषते किंचिदभिन्यासः स उच्यते ।
प्रत्याख्यातः स भूयिष्ठः कश्चिदेवात्र सिध्यति ॥

आगन्तुज्वरनिदानं—

अभिघाताभिचाराभ्यामभिशापाभिषङ्गतः ।
आगन्तुर्जायते दोषैर्यथास्वं तं विभावयेत् ॥३३॥

विषकृतज्वररूपं-श्यावास्यता विषकृते तथातीसार एव च
भक्तारुचिः पिपासा च तोदश्च सह मूर्च्छया ॥

ओषधिगन्धजो ज्वरः—

ओषधिगन्धजे मूर्च्छा शिरोरुग्वमथुः क्षवः ।

कामजोज्वर-कामजे चित्तविभ्रंशस्तन्द्राऽऽलस्यमभोजनम्
हृदये वेदना चास्य गात्रं च परिशुष्यति ।

भयशोककोपजा ज्वराः—

भयात्प्रलापः शोकाच्च भवेत्कोपाच्च वेपथुः ॥

अभिचारशापजौ—

अभिचाराभिशापाभ्यां मोहस्तृष्णा च जायते ।

भूताभिषङ्गजः-भूताभिषङ्गादुद्वेगो हास्यरोदनकम्पनम्

दोषकोपविवेकः—

कामशोकभयाद्वायुः, क्रोधात्पित्तं, त्रयो मलाः ।

भूताभिषङ्गात्कुप्यन्ति भूतसामान्यलक्षणाः ॥३८॥

विषमज्वरहेतुः—

दोषोऽल्पो ऽहितसंभूतो ज्वरोत्सृष्टस्य वा पुनः

धातुमन्यतमं प्राप्य करोति विषमज्वरम् ॥३९॥

तस्यागन्तुकारणं-केचिद्भूताभिषङ्गोत्थं ब्रुवते विषमज्वरम्

समविषमौज्वरौ—

( पुनः पञ्चविधो दृष्टो दोषकालबलाबलात् )

सन्ततः सततोऽन्येद्युस्तृतीयकचतुर्थकौ ॥ ४१ ॥

सन्ततं रसरक्तस्थः सोऽन्येद्युः पिशिताश्रितः ।

मेदोगतस्तृतीयेऽह्नि ह्यस्थिमज्जगतः पुनः ॥ ४२ ॥

कुर्यात् चतुर्थकं घोरमन्तकं रोगसंकरम् ।

समज्वरलक्षणम्—

सन्ततस्वरूपम्-सप्ताहं वा दशाहं वा द्वादशाहमथापि वा

सन्तत्या योऽविसर्गी स्यात्सन्ततः स निगद्यते ।

विषमज्वरलक्षणानि तत्र—

सततस्वरूपम्-अहोरात्रे सततको द्वौ कालावनुवर्तते ॥४४॥

अन्येद्युष्कः-अन्येद्युष्कस्त्वहोरात्र एककालं प्रवर्तते।

तृतीयकचतुर्थकौ—

तृतीयकस्तृतीयेऽह्नि चतुर्थेऽह्नि चतुर्थकः ॥ ४५ ॥

तृतीयकप्रभावः—

कफपित्तात् त्रिकग्राही पृष्ठाद्वातकफात्मकः।
वातपित्ताच्छिरोग्राही त्रिविधः स्यात्तृतीयकः ॥४६॥

चतुर्थकप्रभावः—

चतुर्थको दर्शयति प्रभावं द्विविधं ज्वरः।
जङ्घाभ्यां श्लष्मिकः पूर्वं शिरस्तोऽनिलसंभवः ॥४७॥

चतुर्थकविपर्ययः-विषमज्वर एवान्यश्चतुर्थकविपर्ययः।
समध्येऽहनि ज्वरयति ह्याद्यावन्ते च मुञ्चति ॥४८॥

वातबलासकज्वरः—

नित्यं मन्दज्वरो रूक्षः शूनकस्तेन सीदति।
स्तब्धाङ्गः श्लेष्मभूयिष्ठो नरो वातबलासकी ॥४९॥

प्रलेपकज्वर—प्रलिम्पन्निव गात्राणि घर्मेण गौरवेण च।
मन्दज्वरविलेपी च सशीतः स्यात्प्रलेपकः ॥ ५० ॥

अर्द्धाङ्गज्वरः—विदग्धेऽन्नरसे देहे श्लेष्मपित्ते व्यवस्थिते ।
तेनार्धं शीतलं देहे चार्धं चोष्णं प्रजायते ॥ ५१ ॥

तद्रूपान्तरमाह—

काये दुष्टं यदा पित्तं श्लेष्मा चान्ते व्यवस्थितः ।
तेनोष्णत्वं शरीरस्य शीतत्वं हस्तपादयोः ॥ ५२ ॥

उपर्युक्तप्रतिकूलं—

काये श्लेष्मा यदा दुष्टः पित्तं चान्ते व्यवस्थितम् ।
शीतत्वं तेन गात्राणामुष्णत्वं हस्तपादयोः ॥ ५३ ॥

शीतादिज्वरः—

त्वक्स्थौ श्लेष्मानिलौ शीतमादौ जनयतो ज्वरे ।
तयोः प्रशान्तयोः पित्तमन्ते दाहं करोति च ॥५४॥

दाहादिज्वरः—

करोत्यादौ तथा पित्तं त्वक्स्थं दाहमतीव च ।
तस्मिन्प्रशान्ते त्वितरौ कुरुतः शीतमन्ततः ॥५५॥

तयोः परिणामः—

द्वावेतौ शीतदाहादिज्वरौ संसर्गजौ स्मृतौ ।
दाहपूर्वस्तयोः कष्टः कृच्छ्रसाध्यतमश्च सः ॥५६॥

रसगतज्वरः—गुरुता हृदयोत्क्लेशः सदनं छर्द्यरोचकौ ।

रसस्थे तु ज्वरे लिङ्गं दैन्यं चास्योपजायते ॥५७॥

**रक्तगतज्वरः**—रक्तनिष्ठीवनं दाहो मोहश्छर्दनविभ्रमौ ।
प्रलापः पिडका तृष्णा रक्तप्राप्ते ज्वरे नृणाम् ॥५८॥

**मांसगतज्वरः**—पिण्डिकोद्वेष्टनं तृष्णा सृष्टमूत्रपुरीषता ।
ऊष्माऽन्तर्दाहविक्षेपौ ग्लानिः स्यान्मांसगे ज्वरे॥५९

**मेदोगतज्वरः**—

भृशं स्वेदस्तृषा मूर्च्छा प्रलापश्छर्दिरेव च ।
दौर्गन्ध्यारोचकौ ग्लानिर्मेदःस्थे चासहिष्णुता ॥६०

**अस्थिगतज्वरः**—

भेदोऽस्थ्नां कूजनं श्वासो विरेकश्छर्दिरेव च ।
विक्षेपणं च गात्राणामेतदस्थिगते ज्वरे ॥ ६१ ॥

**मज्जागतज्वरः**—

तमःप्रवेशनं हिक्का कासः शैत्यं वमिस्तथा ।
अन्तर्दाहो महाश्वासो मर्मच्छेदश्च मज्जगे ॥ ६२ ॥

**शुक्रगतज्वरः**—मरणं प्राप्नुयात्तत्र शुक्रस्थानगते ज्वरे ।
शेफसः स्तब्धता मोक्षः शुक्रस्य तु विशेषतः ॥६३॥

**तत्साध्याऽसाध्यभेदाः**—

रसरक्ताश्रितः साध्यो मांसमेदोगतश्च यः ।

अस्थिमज्जगतः कृच्छ्रः शुक्रस्थस्तु न सिध्यति ॥६४

प्राकृतवैकृतौ—वर्षाशरद्वसन्तेषु वाताद्यैः प्राकृतः क्रमात् ।
वैकृतोऽन्यः स दुःसाध्यः प्राकृतश्चानिलोद्भवः ॥६५

दोषाणां प्राकृतज्वरकर्त्तृता—

वर्षासु मारुतो दुष्टः पित्तश्लेष्मान्वितो ज्वरम् ।
कुर्यात्पित्तं च शरदि तस्य चानुबलः कफः ॥६६॥
तत्प्रकृत्या विसर्गाच्च तत्र नाऽनशनाद्भयम् ।
कफो वसन्ते तमपि वातपित्तं भवेदनु ॥ ६७ ॥

दोषप्रवृत्तिवृद्धी—काले यथास्वं सर्वेषां प्रवृत्तिर्वृद्धिरेव वा

अनुपशयोपशयौ—

निदानोक्तानुपशयो विपरीतोपशायिता ॥ ६८ ॥

अन्तर्वेगज्वरः—

अन्तर्दाहोऽधिकस्तृष्णा प्रलापः श्वसनं भ्रमः ।
सन्ध्यस्थिशूलमस्वेदो दोषवर्चोविनिग्रहः ॥ ६९ ॥
अन्तर्वेगस्य लिङ्गानि ज्वरस्यैतानि लक्षयेत् ।

बहिर्वेगज्वरः—

सन्तापो ह्यधिको बाह्यस्तृष्णादीनां च मार्दवम् ॥७०॥
बहिर्वेगस्य लिङ्गानि सुखसाध्यत्वमेव च ।

आमज्वरमाह—

लालाप्रसेको हृल्लासहृदयाशुद्ध्यरोचकाः ॥ ७१ ॥
तन्द्रालस्याविपाकास्यवैरस्यं गुरुगात्रता ।
क्षुन्नाशो बहुमूत्रत्वं स्तब्धता बलवान् ज्वरः ॥७२॥
आमज्वरस्य लिङ्गानि न दद्यात्तत्र भेषजम् ।
भेषजं ह्यामदोषस्य भूयो ज्वलयति ज्वरम् ॥ ७३ ॥

पच्यमानज्वरः—

ज्वरवेगोऽधिकस्तृष्णा प्रलापः श्वसनं भ्रमः ।
मलप्रवृत्तिरुत्क्लेशः पच्यमानस्य लक्षणम् ॥ ७४ ॥

निरामज्वरः—

क्षुत्क्षामता लघुत्वं च गात्राणां ज्वरमार्दवम् ।
दोषप्रवृत्तिरष्टाहो निरामज्वरलक्षणम् ॥ ७५ ॥

साध्यज्वररूपं—

बलवत्स्वल्पदोषेषु ज्वरः साध्योऽनुपद्रवः ।

असाध्यज्वररूपं—

हेतुभिर्बहुभिर्जातो बलिभिर्बहुलक्षणः ॥ ७६ ॥
ज्वरः प्राणान्तकृद्यश्च शीघ्रमिन्द्रियनाशनः ।
पुनश्च—ज्वरः क्षीणस्य शूनस्य गम्भीरो दैर्घरात्रिकः ॥७७

असाध्यो बलवान् यश्च केशसीमन्तकृज्ज्वरः ।

गम्भीरज्वररूपं

गम्भीरस्तु ज्वरो ज्ञेयो ह्यन्तर्दाहेन तृष्णया ॥ ७८ ॥

आनद्धत्वेन चात्यर्थं श्वासकासोद्गमेन च ।

असाध्यगम्भीरः

आरम्भाद्विषमो यस्तु यश्च वा दैर्घरात्रिकः ॥

क्षीणस्य चातिरूक्षस्य गम्भीरो यस्य हन्तितम्

असाध्यज्वरः—

विसंज्ञस्ताम्यते यस्तु शेते निपतितोऽपि वा ॥

शीतार्दितोऽन्तरुष्णश्च ज्वरेण म्रियते नरः ।

असाध्यज्वरी—

यो हृष्टरोमा रक्ताक्षो हृदि संघातशूलवान् ॥ ८१ ॥

वक्त्रेणचैवोच्छ्वसिति तं ज्वरो हन्ति मानवम् ।

अपरः—हिक्काश्वासतृषायुक्तं मूढं विभ्रान्तलोचनम् ॥

सततोच्छ्वसिनं क्षीणं नरं क्षपयति ज्वरः ।

अपरः—हतप्रभेन्द्रिययं क्षीणमरोचकनिपीडितम् ॥८३॥

गम्भीरतीक्ष्णवेगार्तं ज्वरितं परिवर्जयेत् ।

ज्वरमोक्षलक्षणं

दाहः स्वेदो भ्रमस्तृष्णा कम्पविड्भिदसंज्ञिता ॥

कूजनं चास्यवैगन्ध्यमाकृतिर्ज्वरमोक्षणे ।

ज्वरमुक्तलक्षणं—

स्वेदो लघुत्वं शिरसः कण्डुः पाको मुखस्य च
क्षवथुश्चान्नलिप्सा च ज्वरमुक्तस्य लक्षणम् ॥

इति श्रीमाधवकरविरचिते माधवनिदाने ज्वरनिदानं-समाप्तम् ।

## अथ-अतीसार-निदानम् ।

कारणम्—गुर्वतिस्निग्धरूक्षोष्णद्रवस्थूलातिशीतलैः ।
विरुद्धाध्यशनाजीर्णैर्विषमैश्चापि भोजनैः ॥ १ ॥
स्नेहाद्यैरतियुक्तैश्च मिथ्यायुक्तैर्विषैर्भयैः ।
शोकाद्दुष्टाम्बुमद्यातिपानैः सात्म्यर्तुपर्ययैः ॥ २ ॥
जलाभिरमणैर्वेगविघातैः क्रिमिदोषतः ।
नृणां भवत्यतीसारो लक्षणं तस्य वक्ष्यते ॥ ३ ॥
संशम्यापां धातुरग्निं प्रवृद्धः
शकृन्मिश्रो वायुनाऽधः प्रणुन्नः ।
सरत्यतीवातिसारं तमाहु-
र्व्याधिं घोरं षड्विधं तं वदन्ति ॥

एकैकशः सर्वशश्चापि दोषैः
शोकेनान्यः षष्ठ आमेन चोक्तः ॥ ४ ॥

पूर्वरूपं-हृन्नाभिपायूदरकुक्षितोद-
गात्रावसादानिलसन्निरोधाः ।
विट्सङ्ग आध्मानमथाविपाको
भविष्यतस्तस्य पुरःसराणि ॥ ५ ॥

वातजः-अरुणं फेनिलं रूक्षमल्पमल्पं मुहुर्मुहुः ।
शकृदामं सरुक्शब्दं मारुतेनातिसार्यते ॥ ६ ॥

पित्तजः-पित्तात्पीत्तं नीलमालोहित्त वा
तृष्णामूर्च्छादाहपाकोपपन्नम् ।

कफजः-शुक्लं सान्द्रं श्लेष्मणा श्लेष्मयुक्तं
विस्रं शीतं हृष्टरोमा मनुष्यः ॥ ७ ॥

त्रिदोषजः-वराहस्नेहमांसाम्बुसदृशं सर्वरूपिणम् ।
कृच्छ्रसाध्यमतीसारं विद्याद्दोषत्रयोद्भवम् ॥ ८ ॥

शोकातिसारः-तैस्तैर्भावैः शोचतोल्पाशनस्य
वाष्पोष्मा वै वह्निमाविश्य जन्तोः ।
कोष्ठं गत्वा क्षोभयेत्तस्य रक्तं
तच्चाधस्तात्काकणन्तीप्रकाशम् ॥ ९ ॥

निर्गच्छेद्वै विड्विमिश्रं ह्यविड्वा
निर्गन्धं वा गन्धवद्वाऽतिसारः ।
शोकोत्पन्नो दुश्चिकित्स्योऽतिमात्रं
रोगो वैद्यैः कष्ट एष प्रदिष्टः ॥ १० ॥
अन्नाजीर्णात्प्रद्रुताः क्षोभयन्तः
कोष्ठं दोषा धातुसंघान्मलांश्च ।
नानावर्णं नैकशः सारयन्ति
शूलोपेतं षष्ठमेनं वदन्ति ॥ ११ ॥

आमलक्षणं-संसृष्टमेभिर्दोषैस्तु न्यस्तमप्स्ववसीदति ।
पुरीषं भृशदुर्गन्धि पिच्छिलं चामसंज्ञितम् ॥ १२ ॥

पक्वलक्षणं-एतान्येव तु लिङ्गानि विपरीतानि यस्य वै ।
लाघवं च विशेषेण तस्य पक्वं विनिर्दिशेत् ॥१३॥

असाध्यलक्षणानि—

पक्वजाम्बवसंकाशं यकृत्पिण्डनिभं तनु ।
घृततैलवसामज्जवेशवारपयोदधि ॥ १४ ॥
मांसधावनतोयाभं कृष्णं नीलारुणप्रभम् ।
मेचकं स्निग्धकर्बूरं चन्द्रकोपगतं घनम् ॥ १५ ॥
कुणपं मस्तुलुङ्गाभं सुगन्धि कुथितं बहु ।

तृष्णादाहतमःश्वासहिक्कापार्श्वास्थिशूलिनम् ॥
संमूर्च्छारतिसंमोहयुक्तं पक्वलीगुदम् ।
प्रलापयुक्तं च भिषग्वर्जयेदतिसारिणम् ॥१७॥
असंवृतगुदं क्षीणं दूराध्मातमुपद्रुतम् ।
गुदे पक्वे गतोष्माणमतिसारकिणं त्यजेत् ॥१८॥
श्वासशूलपिपासार्तं क्षीणं ज्वरनिपीडितम् ।
विशेषेण नरं वृद्धमतीसारो विनाशयेत् ॥१९॥

रक्तातिसारहेतुः—

पित्तकृन्ति यदाऽत्यर्थं द्रव्याण्यश्नाति पैत्तिके ।
तदोपजायतेऽभीक्ष्णं रक्तातीसार उल्वणः ॥२०॥

प्रवाहिका-वायुः प्रवृद्धो निचितं बलासं
नुदत्यधस्तादहिताशनस्य ।
प्रवाहतोऽल्पं बहुशो मलाक्तं
प्रवाहिकां तां प्रवदन्ति तज्ज्ञाः ॥२१॥

वातजाँ-प्रवाहिका वातकृता सशूला,
पित्तजाँ-कफजा च-पित्तात्सदाहा, सकफा कफाच्च ।
रक्तजाँ-सशोणिता शोणितसंभवा च,
ताः स्नेहरूक्षप्रभवा मतास्तु ॥२२॥

तासामतीसारवदादिशेच्च
लिङ्गं क्रमं चामविपक्वतां च ॥२३॥

गतातीसाररूपं—

यस्योच्चारं विना मूत्रं सम्यग्वायुश्च गच्छति ।
दीप्ताग्नेर्लघुकोष्ठस्य स्थितस्तस्योदरामयः ॥२४॥

ज्वरातीसाररूपं—

ज्वरातीसारयोरुक्तं निदानं यत्पृथक् पृथक् ।
तस्माज्ज्वरातिसारस्य तेन नात्रोदितं पुनः ॥२५॥

इति श्रीमाधवकरविरचिते-माधवनिदाने-
अतिसारनिदानं समाप्तम् ।

---

# अथ ग्रहणीरोग-निदानम् ।

ग्रहणीहेतुः-अतीसारे निवृत्तेऽपि मन्दाग्नेरहिताशिनः ।
भूयः सन्दूषितो वह्निर्ग्रहणीमभिदूषयेत् ॥
सम्प्राप्तिः-एकैकशः सर्वशश्च दोषैरत्यर्थमूर्च्छितैः ।
सा दुष्टा बहुशो भुक्तामाममेव विमुञ्चति ॥२॥
ग्रहणीस्वरूपं-पक्वं वा सरुजं पूति मुहुर्बद्धं मुहुर्द्रवम् ।
ग्रहणीरोगमाहुस्तं ह्यायुर्वेदविदो जनाः ॥३॥

पूर्वरूपं--पूर्वरूपं तु तस्येदं तृष्णाऽऽलस्यं बलक्षयः ।
विदाहोऽन्नस्य पाकश्च चिरात्कायस्य गौरवम् ॥

वातग्रहणीहेतुः--कटुतिक्तकषायातिरूक्षसंदुष्टभोजनैः ।
प्रमितानशनात्यध्ववेगनिग्रहमैथुनैः ॥५॥
मारुतः कुपितो वह्निं संछाद्य कुरुते गदान् ।

तल्लक्षणञ्च—

तस्यान्नं पच्यते दुःखं शुक्तपाकं खराङ्गता ॥६॥
कण्ठास्यशोषः क्षुत्तृष्णा तिमिरं कर्णयोः स्वनः ।
पार्श्वोरुवङ्क्षणग्रीवारुगभीक्ष्णं विसूचिका ॥७॥
हृत्पीडाकार्श्यदौर्बल्यं वैरस्यं परिकर्तिका ।
गृद्धिः सर्वरसानां च मनसः सदनं तथा ॥८॥
जीर्णे जीर्यति चाध्मानं भुक्ते स्वास्थ्यमुपैति च ।
स वातगुल्महृद्रोग प्लीहाशङ्की च मानवः ॥६॥
चिराद्दुःखं द्रवं शुष्कं तन्वामं शब्दफेनवत् ।
पुनः पुनः सृजेद्वर्चः कासश्वासार्दितोऽनिलात् ॥१०॥

पित्तग्रहणीहेतुः—

कट्वजीर्णविदाह्यम्लक्षाराद्यैः पित्तमुल्वणम् ।
आप्लावयद्धन्त्यनलं जलं तप्तमिवानलम् ॥११॥

कल्लक्षणञ्च—

सोऽजीर्णं नील पीताभं पीताभः सार्यते द्रवम् ।
पूत्यम्लोद्गारहृत्कण्ठदाहारुचितृडर्दितः ॥१२॥

कफग्रहणीहेतुः—

गुर्वतिस्निग्धशीतादिभोजनादतिभोजनात् ।
भुक्तमात्रस्य च स्वप्नाद्धन्त्यग्निं कुपितः कफः ॥१३॥

तल्लक्षणञ्च--तस्यान्नं पच्यते दुःखं हृल्लासच्छर्द्यरोचकाः ।
आस्योपदेहमाधुर्यं कासष्ठीवनपीनसाः ॥१४॥
हृदयं मन्यते स्त्यानमुदरं स्तिमितं गुरु ।
दुष्टो मधुर उद्गारः सदनं स्त्रीष्वहर्षणम् ॥१५॥
भिन्नामश्लेष्मसंसृष्टगुरुवर्चःप्रवर्तनम् ।
अकृशस्यापि दौर्बल्यमालस्यं च कफात्मके ॥१६॥

त्रिदोषहेतुलिंगे--पृथग्वातादिनिर्दिष्टहेतुलिङ्गसमागमे ।
त्रिदोषं निर्दिशेदेवं तेषां वक्ष्यामि भेषजम् ॥१७॥

संग्रहग्रहणी--अन्त्रकूजनमालस्यं दौर्बल्यं सदनं तथा ।
द्रवं शीतं घनं स्निग्धं शकटीवेदनं शकृत् ॥१८॥
आमं बहु सपैच्छिल्यं सशब्दं मन्दवेदनम् ।
पक्षान्मासाद्दशाहाद्वा नित्यं वाऽप्यथमुञ्चति ॥१९॥

दिवा प्रकोपो भवति रात्रौ शान्तिं व्रजेच्च सा ।
दुर्विज्ञेया दुश्चिकित्स्या चिरकालानुबन्धिनी ॥२०॥
सा भवेदामवातेन संग्रहग्रहणी मता ।
घटीयन्त्रम्—स्वपतः पार्श्वयोः शूलं गलज्जलघटीध्वनिः ॥
तं वदन्ति घटीयन्त्रमसाध्यं ग्रहणीगदम् ।

सामता निरामता च—

दोषं सामं निरामं च विद्यादत्रातिसारवत् ॥२२॥
असाध्यरूपं—लिङ्गैरसाध्यो ग्रहणीविकारो
यैस्तैरतीसारगदो न सिध्येत् ।
वृद्धस्य नूनं ग्रहणीविकारो
हत्वा तनूं नैव निवर्तते च ॥ २३ ॥
बालके ग्रहणी साध्या, यूनि कृच्छ्रा समीरिता ।
वृद्धे त्वसाध्या विज्ञेया, मतं धन्वन्तरेरिदम् ॥२४॥
इति श्रीमाधवकरविरचिते माधवनिदाने
ग्रहणीरोगनिदानं समाप्तम् ।

## अथ-अर्शोरोग-निदानम् ।

संख्या—पृथग्दोषैः समस्तैश्च शोणितात्सहजानि च ।
अर्शांसि षट्प्रकाराणि विद्याद् गुदवलित्रये ॥ १ ॥

सम्प्राप्तिः—

दोषास्त्वङ्मांसमेदांसि संदूष्य विविधाकृतीन् ।
मासाङ्कुरानपानादौ कुर्वन्त्यर्शांसि तान् जगुः ॥२

वातार्शोहेतुः—कषायकटुतिक्तानि रूक्षशीतलघूनि च ।
प्रमिताल्पाशनं तीक्ष्णं मद्यं मैथुनसेवनम् ॥३॥
लङ्घनं देशकालौ च शीतौ व्यायामकर्म च ।
शोको वातातपस्पर्शो हेतुर्वातार्शसां मतः ॥ ४ ॥

पित्तार्शोहेतुः—

कट्वम्ललवणोष्णानि-व्यायामाग्न्यातपप्रभाः ।
देशकालावशिशिरौ क्रोधो मद्यमसूयनम् ॥ ५ ॥
विदाहि तीक्ष्णमुष्णं च सर्वं पानान्नभेषजम् ।
पित्तोल्वणानां विज्ञेयः प्रकोपे हेतुरर्शसाम् ॥ ६ ॥

कफार्शोहेतुः—मधुरस्निग्धशीतानि लवणाम्ल गुरूणि च ।
अव्यायामौ दिवास्वप्नः शय्यासन सुखे रतिः ॥७॥
प्राग्वातसेवा शीतौ च देशकालावचिन्तनम् ।
श्लैष्मिकाणां समुद्दिष्टमेतत्कारणमर्शसाम् ॥ ८ ॥

द्वन्द्वार्शोहेतुः—

हेतुलक्षणसंसर्गाद्विद्याद् द्वन्द्वोल्वणानि च ।

त्रिदोषार्शोहेतुः—

सर्वो हेतुस्त्रिदोषाणां सहजैर्लक्षणैः समम् ॥ ९ ॥

पूर्वरूपं—विष्टम्भोऽन्नस्य दौर्बल्यं कुक्षेराटोप एव च ।

कार्श्यमुद्गारबाहुल्यं सक्थिसादोऽल्पविट्कता ॥१०॥

ग्रहणीदोषपाण्डवर्तेराशङ्का चोदरस्य च ।

पूर्वरूपाणि निर्दिष्टान्यर्शसामभिवृद्धये ॥ ११ ॥

वातगुदांकुराः—

गुदांकुरा बह्वनिलाः शुष्काश्चिमचिमान्विताः ।

म्लानाः श्यावारुणाः स्तब्धा विशदाः परुषाः खराः ॥

मिथो विसदृशा वक्रास्तीक्ष्णा विस्फुटिताननाः ।

बिम्बीखर्जूरकर्कन्धूकार्पासीफलसन्निभाः ॥ १३ ॥

केचित्कदम्बपुष्पाभाः केचित्सिद्धार्थकोपमाः ।

शिरःपार्श्वांसकट्यूरुवङ्क्षणाद्यधिकव्यथाः ॥ १४ ॥

क्षवथूद्गारविष्टम्भहृद्ग्रहारोचकप्रदाः ।

कासश्वासाग्निवैषम्यकर्णनादभ्रमावहाः ॥ १५ ॥

तैरार्तो ग्रथितं स्तोकं सशब्दं सप्रवाहिकम् ।

रुक्फेनपिच्छानुगतं विबद्धमुपवेश्यते ॥ १६ ॥

कृष्णत्वङ्नखविण्मूत्रनेत्रवक्त्रश्च जायते ।

गुल्मप्लीहोदराष्ठीलासंभवस्तत एव च ॥ १७ ॥

पित्तगुदांकुराः—

पित्तोत्तरा नीलमुखा रक्तपीतासितप्रभाः ।
तन्वस्रस्राविणो विस्रास्तनवो मृदवः श्लथाः ॥ १८ ॥
शुकजिह्वायकृत्खण्डजलौकोवक्त्रसन्निभाः ।
दाहपाकज्वरस्वेदतृण्मूर्च्छारुचिमोहदाः ॥ १९ ॥
सोष्माणो द्रवनीलोष्णपीतरक्तामवर्चसः ।
यवमध्या हरित्पीतहारिद्रत्वङ्नखादयः ॥ २० ॥

कफगुदांकुराः—

श्लेष्मोल्वणा महामूला घना मन्दरुजः सिताः ।
उत्सन्नोपचितस्निग्धस्तब्धवृत्तगुरुस्थिराः ॥ २१ ॥
पिच्छिलाः स्तिमिताः श्लक्ष्णाः
कण्ड्वाढ्याः स्पर्शनप्रियाः ।
करीरपनसास्थ्याभास्तथा गोस्तनसन्निभाः ॥ २२ ॥
वङ्क्षणानाहिनः पायुवस्तिनाभिविकर्षिणः ।
सश्वासकासहृल्लासप्रसेकारुचिपीनसाः ॥ २३ ॥
मेहकृच्छ्रशिरोजाड्यशिशिरज्वरकारिणः ।
क्लैब्याग्निमार्दवच्छर्दिरामप्रायविकारदाः ॥ २४ ॥

वसाभसकफप्रायपुरीषाः सप्रवाहिकाः ।
न स्रवन्ति न भिद्यन्ते पाण्डुस्निग्धत्वगादयः ॥

त्रिदोषसहजे च—

सर्वैः सर्वात्मकान्याहुर्लक्षणैः सहजानि च ।

रक्तार्शोगुदांकुराः—

रक्तोल्वणा गुदे कीलाः पित्ताकृतिसमन्विताः ॥२६॥
वटप्ररोहसदृशा गुञ्जाविद्रुमसन्निभाः ।
तेऽत्यर्थं दुष्टमुष्णं च गाढविट्कप्रपीडिताः ॥२७॥
स्रवन्ति सहसा रक्तं तस्य चातिप्रवृत्तितः ।
भेकाभः पीडयते दुःखैः शोणितक्षयसंभवैः ॥ २८ ॥
हीनवर्णबलोत्साहो हतौजाः कलुषेन्द्रियः ।
विट् श्यावं कठिनं रूक्ष मधो वायुर्न वर्तते ॥
तनु चारुणवर्णं च फेनिलं चासृगर्शसाम् ।
कट्यूरुगुदशूलं च दौर्बल्यं यदि चाधिकम् ॥ ३० ॥
तत्रानुबन्धो वातस्य हेतुर्यदि च रूक्षणम् ।
शिथिलं श्वेतपीतं च स्निग्धं विट्गुरुशीतलम् ॥
यद्यर्शसां घनं चासृक् तन्तुमत्पाण्डु पिच्छिलम् ।
गुदं सपिच्छं स्तिमितं गुरु स्निग्धं च कारणम्.

श्लेष्मानुबन्धो विज्ञेयस्तत्र रक्तार्शसां बुधैः ।

कथमर्शांसि कष्टानि ?

पञ्चात्मा मारुतः पित्तं कफो गुदवलित्रयम् ।
सर्व एव प्रकुप्यन्ति गुदजानां समुद्भवे ॥ ३३ ॥
तस्मादर्शांसि दुःखानि बहुव्याधिकराणि च ।
सर्वदेहोपतापीनि प्रायः कृच्छ्रतमानि च ॥ ३४ ॥

साध्यानि—

बाह्यायां तु वलौ जातान्येकदोषोल्वणानि च ।
अर्शांसि सुखसाध्यानि न चिरोत्पतितानि च ॥ ३५ ॥

दुःसाध्यानि—

द्वन्द्वजानि द्वितीयायां वलौ यान्याश्रितानि च ।
कृच्छ्रसाध्यानि तान्याहुः परिसंवत्सराणि च ॥ ३६ ॥

असाध्यानि—

सहजानि त्रिदोषाणि यानि चाभ्यन्तरां वलिम् ।
जायन्तेऽर्शांसि संश्रित्य तान्यसाध्यानि निर्दिशेत् ३७

असाध्यानामपि याप्यतामाह—

शेषत्वादायुषस्तानि चतुष्पादसमन्विते ।
याप्यन्ते दीप्तकायाग्नेः प्रत्याख्येयान्यतोऽन्यथा ॥३८॥

असाध्यरोगी—

हस्त पादे मुखे नाभ्यां गुदे वृषणयोस्तथा ।
शोथो हृत्पार्श्वशूलं च यस्याऽसाध्योऽर्शसो हि सः ॥
अपरश्च—हृत्पार्श्वशूलं संमोहश्छर्दिरङ्गस्य रुग्ज्वरः ।
तृष्णा गुदस्य पाकश्च निहन्युर्गुदजातुरम् ॥ ४० ॥
अपरश्च—तृष्णारोचकशूलार्तमतिप्रसृतशोणितम् ।
शोथातिसारसंयुक्तमर्शांसि क्षपयन्ति हि ॥ ४१ ॥

लिंगाद्यावर्शांसि—

मेढ्रादिष्वपि वक्ष्यन्ते यथास्वं नाभिजानि च ।
गण्डपदास्यरूपाणि पिच्छिलानि मृदूनि च ॥ ४२ ॥

चर्मकील-सम्प्राप्ति—

व्यानो गृहीत्वा श्लेष्माणं करोत्यर्मस्त्वचो बहिः ।
कीलोपमं स्थिरखरं चर्मकीलं तु तद्विदुः ॥ ४३ ॥
तल्लक्षणं—वातेन तोदपारुष्यं पित्तादसितवक्त्रता ।
श्लेष्मणा स्निग्धता चास्य ग्रथितत्वं सवर्णता ॥४४॥

इति श्रीमाधवकरविरचिते माधवनिदाने-
अर्शोरोग-निदानं समाप्तम् ॥

———

# अथ--अग्निमान्द्य--अजीर्ण--विसूचिका-अलसक--विलम्बिका—निदानम्

अग्निमान्द्यवर्णनं—

मन्दस्तीक्ष्णोऽथ विषमः समश्चेति चतुर्विधः ।
कफपित्तानिलाधिक्यात्तत्साम्याज्जाठरोऽनलः ॥ १ ॥

तत्कार्य—

विषमो वातजान् रोगान्, तीक्ष्णः पित्तनिमित्तजान् ।
करोत्यग्निस्तथा मन्दो विकारान् कफसंभवान् ।
समा समाग्नेरशिता मात्रा सम्यग्विपच्यते ।
स्वल्पाऽपि नैव मन्दाग्नेर्विषमाग्नेस्तु देहिनः ॥ ३ ॥
कदाचित्पच्यते सम्यक्कदाचिन्न त्रि पच्यते ।
मात्राऽतिमात्राऽप्यशिता सुखं यस्य विपच्यते ।
तीक्ष्णाग्निरिति तं विद्यात्समाग्निः श्रेष्ठ उच्यते ॥ ४ ॥

## अजीर्णवर्णनं ।

तत्संख्या च—

आमं विदग्धं विष्टब्धं कफपित्तानिलैस्त्रिभिः :
अजीर्णं केचिदिच्छन्ति चतुर्थं रसशेषतः ॥ ५ ॥

अजीर्णं पञ्चमं केचिन्निर्दोषं दिनपाकि च ।
वदन्ति षष्ठं चाजीर्णं प्राकृतं प्रतिवासरम् ॥६॥

तद्धेतुः--अत्यम्बुपानाद्विषमाशनाच्च
संधारणात्स्वप्नविपर्ययाच्च ।
कालेऽपि सात्म्यं लघु चापि भुक्त-
मन्नं न पाकं भजते नरस्य ॥७॥

ईर्ष्याभयक्रोधपरिप्लुतेन लुब्धेन रुग्दैन्यनिपीडितेन ।
प्रद्वेषयुक्तेन च सेव्यमानमन्नं न सम्यक्परिपाकमेति

आमाजीर्णं--तत्रामे गुरुतोत्क्लेदः शोथो गण्डाक्षिकूटगः
उद्गारश्च यथाभुक्तमविदग्धः प्रवर्तते ॥६॥

विदग्धं--विदग्धे भ्रमतृण्मूर्च्छाः पित्ताच्च विविधा रुजः ।
उद्गारश्च सधूमाम्लः स्वेदो दाहश्च जायते ॥१०॥

विष्टब्धं--विष्टब्धे शूलमाध्मानं विविधा वातवेदनाः ।
मलवाताप्रवृत्तिश्च स्तम्भो मोहोऽङ्गपीडनम् ॥११॥
रसशेषेऽन्नविद्वेषो हृदयाशुद्धिगौरवे ।
मूर्च्छा प्रलापो वमथुः प्रसेकः सदनं भ्रमः ॥१२॥
उपद्रवा भवन्त्येते मरणं चाप्यजीर्णतः ।
अजीर्णमनाः पशुवद् भुञ्जते येऽप्रमाणतः ।

रोगानीकस्य ते मूलमजीर्णं प्राप्नुवन्ति हि ॥१३॥

विसूच्यादिहेतुः—

अजीर्णमामं विष्टब्धं विदग्धं च यदीरितम् ।
विसूच्यलसकौ तस्माद्भवेच्चापि विलम्बिका ॥१४॥

विसूचिकारूपं—

सूचीभिरिव गात्राणि तुदन् संतिष्ठतेऽनिलः ।
यत्राजीर्णेन सा वैद्यैर्विसूचीति निगद्यते ॥१५॥
न तां परिमिताहारा लभन्ते विदितागमाः ।
मूढास्तामजितात्मानो लभन्तेऽशनलोलुपाः ॥१६॥
मूर्च्छातिसारो वमथुः पिपासा
शूलो भ्रमोद्वेष्टनजजृम्भदाहाः ।
वैवर्ण्यकम्पौ हृदये रुजश्च
भवन्ति तस्यां शिरसश्च भेदः ॥१७॥

अलसकरूपं--कुक्षिरानह्यतेऽत्यर्थं प्रताम्येत्परिकूजति ।
निरुद्धो मारुतश्चैव कुक्षावपरि धावति ॥१८॥
वातवर्चो निरोधश्च यस्यात्यर्थं भवेदपि ।
तस्यालसकमाचष्टे तृष्णोद्गारौ च यस्य तु ॥१९॥

विलम्बिका वा दण्डालसकः—

दुष्टं तु भुक्तं कफमारुताभ्यां

प्रवतते नोर्ध्वमधश्च यस्य ।
विलम्बिकां तां भृशदुश्चिकित्स्या-
माचक्षते शास्त्रविदः पुराणाः ॥२०॥
यः श्यावदन्तौष्ठनखोऽल्प संज्ञो
वम्यर्दितोऽभ्यन्तरयातनेत्रः ।
क्षामस्वरः सर्वविमुक्तसन्धि-
र्यायान्नरः सोऽपुनरागमाय ॥२१॥

आमकार्य्यं—

यत्रस्थमामं विरुजेत्तमेव देशं विशेषेण विकारजातैः ।
दोषेण येनावततं शरीरं तल्लक्षणैरामसमुद्भवैश्च ॥२२॥

अजीर्णमुक्तलिंगं—

उद्गारशुद्धिरुत्साहो वेगोत्सर्गो यथोचितः ।
लघुता क्षुत्पिपासा च जीर्णाहारस्य लक्षणम् ॥

इति श्रीमाधवकरविरचिते माधवनिदाने-अग्निमान्द्य-
अजीर्ण-विसूचिका-अलसक-विलम्बिका-
निदानं समाप्तम् ।

———

# अथ क्रिमिरोग-निदानम् ।

क्रिमिसंख्या—

क्रिमयश्च द्विधा प्रोक्ता बाह्याभ्यन्तरभेदतः ।
बहिर्मलकफासृग्विड्जन्मभेदाच्चतुर्विधाः ॥१॥
नामतो विंशतिविधाः,························ ।

बाह्यानाह--··············बाह्यास्तत्र मलोद्भवाः ।

तत्स्वरूपं--तिलप्रमाणसंस्थानवर्णाः केशाम्बराश्रयाः ॥

बहुपादाश्च सूक्ष्माश्च यूका लिक्षाश्च नामतः ।
द्विधा ते कोठपिडिकाकण्डूगण्डान्प्रकुर्वते ॥३॥

हेतुः--अजीर्णभोजी मधुराम्लपित्यो
द्रवप्रियः पिष्टगुडोपभोक्ता ।
व्यायामवर्जी च दिवाशयानो
विरुद्धभुक् संलभते क्रिमींस्तु ॥४॥

मासपिष्टाम्ललवणगुड़शाकैः पुरीषजाः ।
मांसमत्स्यगुडक्षीरदधिशुक्तैः कफोद्भवाः ॥५॥
विरुद्धाजीर्णशाकाद्यैः शोणितोत्था भवन्ति हि ।

संजातक्रिमिरूपं—

ज्वरो विवर्णता शूलं हृद्रोगः सदनं भ्रमः ॥६॥

भक्तद्वेषोऽतिसारश्च संजातक्रिमिलक्षणम् ।

अमाशयजा—

कफादामाशये जाता वृद्धाः सर्पन्ति सर्वतः ॥७॥
पृथुब्रध्ननिभाः केचित्केचिद्गण्डूपदोपमाः ।
रूढधान्याङ्कुराकारास्तनुदीर्घास्तथाऽणवः ॥८॥
श्वेतास्ताम्रावभासाश्च नामतः सप्तधा तु ते ।
तन्नामानि—अन्त्रादा उदरावेष्टा हृदयादा महागुदाः ॥९॥
चुरवो दर्भकुसुमाः सुगन्धास्ते च कुर्वते ।
तत्कार्य्यं—हृल्लासमास्यस्रवणमविपाकमरोचकम् ॥१०॥
मूर्च्छाच्छर्दिज्वरानाहकार्श्यक्षवथुपीनसान् ।
रक्तजाः—रक्तवाहिसिरास्थानरक्तजा जन्तवोऽणवः ॥११
अपादा वृत्तताम्राश्च सौक्ष्म्यात्केचिददर्शनाः ।
केशादा रोमविध्वंसा रोमद्वीपा उदुम्बराः ।
षट् ते कुष्ठैककर्माणः सहसौरसमातरः ॥१२॥
पक्वाशयजाः—पक्वाशये पुरीषोत्था जायन्तेऽधोविसर्पिणः ।
प्रवृद्धास्युर्भवेयुश्च ते यदाऽमाशयोन्मुखाः ॥१३॥
तल्लक्षणं—तदास्योद्गारनिःश्वासाविड्गन्धानुविधायिनः ।
पृथुवृत्ततनुस्थूलाः श्यावपीतसितासिताः ॥१४॥

मृद्भक्षणप्रेक्षणकूटशोथाः ।
विण्मूत्रपीतत्वमथाविपाको
भविष्यतस्तस्य पुरःसराणि ॥ ३ ॥

वातपाण्डुः—त्वङ्मूत्रनयनादीनां रूक्षकृष्णारुणाभताः ।
वातपांड्वामये तोदकम्पानाहभ्रमादयः ॥ ४ ॥

पित्तपाण्डुः—पीतमूत्रशकृन्नेत्रो दाहतृष्णाज्वरान्वितः ।
भिन्नविट्कोऽतिपीताभः पित्तपाण्डावामयी नरः ॥५॥

कफपाण्डुः—कफप्रसेकश्वयथु तन्द्रालस्यातिगौरवैः ।
पाण्डुरोगी कफाच्छुक्लैस्त्वङ्मूत्रनयनाननैः ॥६॥

त्रिदोषरूपं—ज्वरारोचकहृल्लासच्छर्दितृष्णाक्लमान्वितः ।
पाण्डुरोगी त्रिभिर्दोषैस्त्याज्यः क्षीणो हतेन्द्रियः ॥७

मृज्जन्यपाण्डुः—मृत्तिकादनशीलस्य कुप्यत्यन्यतमो मलः ।
कषाया मारुतं, पित्तमूषरा, मधुरा कफम् ॥८॥
कोपयेन्मृद्रसादींश्च रौक्ष्याद् भुक्तं च रूक्षयेत् ।
पूरयत्यविपक्वैव स्रोतांसि निरुणद्ध्यपि ॥६॥
इन्द्रियाणां बलं हत्वा तेजो वीर्यौजसी तथा ।
पाण्डुरोगं करोत्याशु बलवर्णाग्निनाशनम् ॥१०॥

असाध्यरूपं—शूनाक्षिकूटगण्डभ्रूः शूनपान्नाभिमेहनः ।

तन्नामानि—ते पञ्च नाम्ना क्रिमयः ककेरुकमकेरुकाः ।

सौसुरादाः सशूलाख्या लेलिहा जनयन्ति हि ॥१५॥

तत्कार्यं—विड्भेदशूलविष्टम्भकार्श्यपारुष्यपाण्डुताः ।

रोमहर्षाग्निसदनं गुदकण्डूर्विमार्गगाः ॥१६॥

इति श्रीमाधवकरविरचिते माधवनिदाने क्रिमिरोग-निदानं समाप्तम् ।

---

# अथ पांडुरोग-कामला-कुम्भकामला-हलीमक-निदानम् ।

संख्या—पाण्डुरोगाः स्मृताः पञ्च, वातपित्तकफैस्त्रयः ।

चतुर्थः सन्निपातेन, पञ्चमो भक्षणान्मृदः ॥१॥

पाण्डोर्हेतुः सम्प्राप्तिश्च—

व्यायाममम्लं लवणानि मद्यं

मृदं दिवास्वप्नमतीव तीक्ष्णम् ।

निषेवमाणस्य प्रदूष्य रक्तं

दोषास्त्वचं पाण्डुरतां नयन्ति ॥ २ ॥

पूर्वरूपं—त्वक्स्फोटनष्ठीवनगात्रसाद-

मृद्भक्षणप्रेक्षणकूटशोथाः ।
विण्मूत्रपीतत्वमथाविपाको
भविष्यतस्तस्य पुरःसराणि ॥ ३ ॥

वातपाण्डुः—त्वङ्मूत्रनयनादीनां रूक्षकृष्णारुणाभता ।
वातपांड्वामये तोदकम्पानाहभ्रमादयः ॥ ४ ॥

पित्तपाण्डुः—पीतमूत्रशकृन्नेत्रो दाहतृष्णाज्वरान्वितः ।
भिन्नविट्कोऽतिपीताभः पित्तपाण्डावामयी नरः ॥५॥

कफपाण्डुः—कफप्रसेकश्वयथुतन्द्रालस्यातिगौरवैः ।
पाण्डुरोगी कफाच्छुक्लैस्त्वङ्मूत्रनयनाननैः ॥६॥

त्रिदोषरूपं—ज्वरारोचकहृल्लासच्छर्दितृष्णाक्लमान्वितः ।
पाण्डुरोगी त्रिभिर्दोषैस्त्याज्यः क्षीणो हतेन्द्रियः ॥७

मृज्जन्यपाण्डुः—मृत्तिकादनशीलस्य कुप्यत्यन्यतमो मलः ।
कषाया मारुतं, पित्तमूषरा, मधुरा कफम् ॥८॥
कोपयेन्मृद्रसादींश्च रौक्ष्याद् भुक्तं च रूक्षयेत् ।
पूरयत्यविपक्वैव स्रोतांसि निरुणद्ध्यपि ॥९॥
इन्द्रियाणां वलं हत्वा तेजो वीर्यौजसी तथा ।
पाण्डुरोगं करोत्याशु बलवर्णाग्निनाशनम् ॥१०॥

असाध्यरूपं—शूनाक्षिकूटगण्डभ्रूः शूनपान्नाभिमेहनः ।

क्रिमिकोष्ठोऽतिसार्येत मलं सासृक्कफान्वितम् ॥११॥
पाण्डुरोगश्चिरोत्पन्नः खरीभूतो न सिध्यति ।
कालप्रकर्षाच्छूनानां यो वा पीतानि पश्यति ॥१२॥

अन्यच्च—बद्धाल्पविट् सहरितं सकफं योऽतिसार्यते ।
दीनः श्वेतातिदिग्धाङ्गश्छर्दिं मूर्च्छातृडर्दितः ।

अन्यच्च—स नास्त्यसृक्क्षयाद्यश्च
पाण्डुः श्वेतत्वमाप्नुयात् ॥१३॥

अन्यच्च—पाण्डुदन्तनखो यस्तु पाण्डुनेत्रश्च यो भवेत् ।
पाण्डुसंघातदर्शी च पाण्डुरोगी विनश्यति ॥१४॥

अन्यच्च—अन्तेषु शूनं परिहीणमध्यं
म्लानं तथाऽन्तेषु च मध्यशूनम् ।
गुदे च शेफस्यथ मुष्कयोश्च
शूनं प्रताम्यन्तमसंज्ञकल्पम् ।
विवर्जयेत्पाण्डुकिनं यशोऽर्थी
तथाऽतिसारज्वरपीडितं च ॥१५॥

कामला—पाण्डुरोगी तु योऽत्यर्थं पित्तलानि निषेवते ।
तस्य पित्तमसृङ्मांसं दग्ध्वा रोगाय कल्पते ।
हारिद्रनेत्रः स भृशं हारिद्रत्वङ्नखाननः ।

रक्तपीतशकृन्मूत्रो भेकवर्णो हतेन्द्रियः ॥१७॥
दाहाविपाकदौर्बल्यसदनारुचिकर्षितः ।
कामला बहुपित्तैषा कोष्ठशाखाश्रया मता ।

कुम्भकामला—

कालान्तरात् खरीभूता कृच्छ्रा स्यात्कुम्भकामला ॥
असाध्यरूपं—कृष्णपीतशकृन्मूत्रो भृशं शूनश्च मानवः ।
स रक्ताक्षिमुखच्छर्दिविण्मूत्रो यश्च ताम्यति ॥१९॥
दाहारुचितृडानाहतन्द्रामोहसमन्वितः ।
नष्टाग्निसंज्ञः क्षिप्रं हि कामलावान्विपद्यते ॥२०॥
अन्यच्च—छर्द्यरोचकहृल्लासज्वरक्लमनिपीडितः ।
नश्यति श्वासकासार्तो विड्भेदी कुम्भकामली ॥२१
हलीमकः—यदा तु पाण्डोर्वर्णः स्याद्धरितः श्यावपीतकः
बलोत्साहक्षयस्तन्द्रा मन्दाग्नित्वं मृदुज्वरः ॥२२॥
स्त्रीष्वहर्षोऽङ्गमर्दश्च दाहस्तृष्णारुचिर्भ्रमः ।
हलीमकं तदा तस्य विद्यादनिलपित्ततः ॥२३॥
इति श्रीमाधवकरविरचिते माधवनिदाने पाण्डुरोग-
कामला-कुम्भकामला-हलीमक-निदानं समाप्तम् ।

# अथ रक्तपित्त-निदानम् ।

कारणम्—घर्मव्यायामशोकाध्वव्यवायैरतिसेवितैः ।
तीक्ष्णोष्णक्षारलवणैरम्लैः कटुभिरेव च ॥१॥
सम्प्राप्तिः—पित्तं विदग्धं स्वगुणैर्विदहत्याशु शोणितम् ।
ततः प्रवर्तते रक्तमूर्ध्वं चाधो द्विधाऽपि वा ॥२॥
ऊर्ध्वं नासाक्षिकर्णास्यैर्मेढ्योनिगुदैरधः ।
कुपितं रोमकूपैश्च समस्तैस्तत्प्रवर्तते ॥३॥
पूर्वरूपं—सदनं शीतकामित्वं कण्ठधूमायनं वमिः ।
लोहगन्धिश्च निःश्वासो भवत्यस्मिन् भविष्यति ॥४॥

श्लैष्मिकं—

सान्द्रं सपाण्डु सस्नेहं पिच्छिलं च कफान्वितम् ।
वातिकं—श्यावारुणं सफेनं च तनु रूक्षं च वातिकम् ॥५
पैत्तिकं—रक्तपित्तं कषायाभं कृष्णं गोमूत्रसंनिभम् ।
मेचकागारधूमाभमञ्जनाभं च पैत्तिकम् ।

द्वन्द्वत्रिदोषजं—

संसृष्टलिङ्गं संसर्गात्त्रिलिङ्गं सांनिपातिकम् ॥६॥
ऊर्ध्वगं कफसंसृष्टमधोगं पवनानुगम् ।
द्विमार्गं कफवाताभ्यामुभाभ्यामनुवर्तते ॥७॥

साध्यासाध्यं—

ऊर्ध्वं साध्यमधो याप्यमसाध्यं युगपद्गतम् ।
एकमार्गं बलवतो नातिवेगं नवोत्थितम् ॥८॥
रक्तपित्तं सुखे काले साध्यं स्यान्निरुपद्रवम् ।
एकदोषानुगं साध्यं द्विदोषं याप्यमुच्यते ॥६॥
यत्त्रिदोषमसाध्यं स्यान्मन्दाग्नेरतिवेगगत् ।
व्याधिभिः क्षीणदेहस्य वृद्धस्यानश्नतश्च यत् ॥१०॥
मांसप्रक्षालनाभं कुथितमिव च यत्
कर्दमाम्भोनिभं वा,
मेदः पूयास्रकल्पं यकृदिव यदि वा
पक्वजम्बूफलाभम् ।
यत्कृष्णं यच्च नीलं भृशमतिकुणपं
यत्र चोक्ता विकारा-
स्तद्वर्ज्यं रक्तपित्तं सुरपतिधनुषा
यच्च तुल्यं विभाति ॥ ११ ॥
येन चोपहतो रक्तं रक्तपित्तेन मानवः ।
पश्येद् दृश्यं वियच्चापि तच्चासाध्यमसंशयम् ॥१२॥
लोहितं छर्दयेद्यस्तु बहुशो लोहितेक्षणः ।

लोहितोद्गारदर्शी च म्रियते रक्तपैत्तिकः ॥१३॥

दौर्बल्यश्वासकासज्वरवमथुमदाः पाण्डुतादाहमूर्च्छा
भुक्ते घोरो विदाहस्त्वधृतिरपि सदा
हृद्यतुल्या च पीडा।
तृष्णा कोष्ठस्य भेदः शिरसि च तपनं
पूतिनिष्ठीवनत्वं,
भक्तद्वेषाविपाकौ विकृतिरपि भवेद्रक्तपित्तोपसर्गाः ॥

इति श्रीमाधवकरविरचिते माधवनिदाने
रक्तपित्तनिदानं समाप्तम्।

---

## अथ राजयक्ष्म-उरःक्षत-निदानम्।

कारणं—वेगरोधात् क्षयाच्चैव साहसाद्विषमाशनात्।
त्रिदोषो जायते यक्ष्मा गदो हेतुचतुष्टयात् ॥१॥

सम्प्राप्तिः—कफप्रधानैर्दोषैस्तु रुद्धेषु रसवर्त्मसु।
अतिव्यवायिनो वाऽपि क्षीणे रेतस्यनन्तराः
क्षीयन्ते धातवः सर्वे ततः शुष्यति मानवः ॥२॥

पूर्वरूपं—श्वासाङ्गमर्दकफसंस्रवतालुशोष—

वस्यग्निसादमदपीनसकासनिद्राः ।
शोषे भविष्यति भवन्ति, स चापि जन्तुः
शुक्लेक्षणो भवति मांसपरो रिरंसुः ॥ ३ ॥
स्वप्नेषु काकशुकशल्लकिनीलकण्ठा
गृध्रास्तथैव कपयः कृकलासकाश्च ।
तं वाहयन्ति स नदीर्विजलाश्च पश्ये—
च्छुष्कांस्तरून्पवनधूमदवार्दितांश्च ॥ ४ ॥
सामान्यरूपं-अंसपार्श्वाभितापश्च सन्तापः करपादयोः ।
ज्वरः सर्वाङ्गगश्चेति लक्षणं राजयक्ष्मणः ॥ ५ ॥

एकादशरूपं—

स्वरभेदोऽनिलाच्छूलं संकोचश्चांसपार्श्वयोः ।
ज्वरो दाहोऽतिसारश्च पित्ताद्रक्तस्य चागमः ॥६॥
शिरसः परिपूर्णत्वमभक्तच्छन्द एव च ।
कासः कण्ठस्य चोद्ध्वंसो विज्ञेयः कफकोपतः

असाध्यावस्था—

एकादशभिरेभिर्वा षड्भिर्वाऽपि समन्वितम् ।
तत्षड्रूपं-कासातीसारपार्श्वार्तिस्वरभेदारुचिज्वरैः ॥
त्रिभिर्वा पीडितं लिङ्गैःकासश्वासासृगाः मयैः ।

जह्याच्छोषार्दितं जन्तुमिच्छन् सुविमलं यशः ॥

वर्ज्यः-सर्वैरर्धैस्त्रिभिर्वाऽपि लिङ्गैर्मांसबलक्षये ।

युक्तो वर्ज्यः,

चिकित्स्य-चिकित्स्यस्तु सर्वरूपोऽप्यतोऽन्यथा ॥ १० ॥

असाध्यं-महाशनं क्षीयमाणमतीसारनिपीडितम् ।

शूनमुष्कोदरं चैव यक्ष्मिणं परिवर्जयेत् ॥ ११ ॥

पुनः-शुक्लाक्षमन्नद्वेष्टारमूर्ध्वश्वासनिपीडितम् ।

कृच्छ्रेण वहुमेहन्तं यक्ष्मा हन्तीह मानवम् ॥१२॥

साध्यं-ज्वरानुबन्धरहितं बलवन्तं क्रियासहम् ।

उपक्रमेदात्मवन्तं दीप्ताग्निमकृशं नरम् ॥१३॥

शोषोहेतु भेदाः--

व्यवाय-शोक-वार्धक्य-व्यायामाध्व-प्रशोषितान् ।

व्रणोरः क्षत संज्ञौ च शोषिणौ लक्षणैः शृणु ॥१४॥

मैथुनशोषी-व्यवायशोषी शुक्रस्य क्षयलिङ्गैरुपद्रुतः ।

पाण्डुदेहो यथापूर्वं क्षीयन्ते चास्य धातवः ॥ १५ ॥

शोकशोषी-प्रध्यानशीलः स्रस्ताङ्गः शोकशोष्यपि तादृशः

वार्द्धक्यशोषी—

जराशोषी कृशो मन्दवीर्यबुद्धिबलेन्द्रियः ॥१६॥

कम्पनोऽरुचिमान् भिन्नकांस्यपात्रहतस्वरः ।
क्षीवति श्लेष्मणा हीनं गौरवारतिपीडितः ॥
संप्रस्नुतास्यनासाक्षिः शुष्करूक्षमलच्छवि ।

अध्वशोषी—

अध्वशोषी च स्रस्ताङ्गः संभृष्टपरुषच्छविः ॥१८॥
प्रसुप्तगात्रावयवः शुष्कक्लोमगलाननः ।
व्यायामशोषी-व्यायामशोषी भूयिष्ठमेभिरेव समन्वितः ।
लिङ्गैरुरःक्षतकृतैः संयुक्तश्च क्षतं विना ॥१९॥
व्रणशोषः-रक्तक्षयाद्वेदनाभिस्तथैवाहारयन्त्रणात् ।
व्रणितस्य भवेच्छोषः स चासाध्यतमो मतः ॥२०॥
उरःक्षतं-धनुषाऽऽयस्यतोऽत्यर्थं भारमुद्वहतो गुरुम् ।
युध्यमानस्य बलिभिः पततो विषमोच्चतः ॥ २१ ॥
वृषं हयं वा धावन्तं दम्यं वाऽन्यं निगृह्णतः ।
शिलाकाष्ठाश्मनिर्घातान् क्षिपतो निघ्नतः परान् ॥
अधीयानस्य वाऽत्युच्चैर्दूरं वा व्रजतो द्रुतम् ।
महानदीर्वा तरतो हयैर्वा सह धावतः ॥२३॥
सहसोत्पततो दूरं तूर्णं वाऽपि प्रनृत्यतः ।
तथाऽन्यैः कर्मभिः क्रूरैर्भृशमभ्याहतस्य वा ॥२४॥

विक्षते वक्षसि व्याधिर्बलवान् समुदीर्यते ।
स्त्रीषु चातिप्रसक्तस्य रूक्षाल्पप्रमिताशिनः ॥२५॥
उरोविभज्यतेऽत्यर्थं भिद्यतेऽथ विरुज्यते ।
प्रपीड्यते ततः पार्श्वे शुष्यत्यङ्गं प्रवेपते ॥२६॥
क्रमाद्वीर्यं बलं वर्णो रुचिरग्निश्च हीयते ।
ज्वरो व्यथा मनोदैन्यं विड्भेदाग्निवधावपि ॥२७॥
दुष्टः श्यावः सुदुर्गन्धः पीतो विग्रथितो बहुः ।
कासमानस्य चाभीक्ष्णं कफः सासृक् प्रवर्तते ॥२८॥
स क्षती क्षीयतेऽत्यर्थं तथा शुक्रौजसोः क्षयात् ।

तत्पूर्वरूपं—

अव्यक्तं लक्षणं तस्य पूर्वरूपमिति स्मृतम् ॥२९॥
उरोरुक् शोणितच्छर्दिः कासो वैशेषिकः क्षते ।
क्षीणे सरक्तमूत्रत्वं पार्श्वपृष्ठकटिग्रहः ॥३०॥

तत्साध्यासाध्ये—

अल्पलिङ्गस्य दीप्ताग्नेः साध्यो बलवतो नवः ।
परिसंवत्सरो याप्यः सर्वलिङ्गन्तु वर्जयेत् ॥३१॥
इति श्रीमाधवकरविरचिते माधवनिदाने
राजयक्ष्म-उरःक्षत-निदानं समाप्तम् ।

# अथ कास-निदानम्

कासहेतुः-धूमोपघाताद्रसतस्तथैव
व्यायामरूक्षान्नविषेवणाच्च ।
विमार्गगत्वाच्च हि भोजनस्य
वेगावरोधात् क्षवथोस्तथैव ॥ १ ॥

सम्प्राप्तिः-प्राणो ह्युदानानुगतः प्रदुष्टः
स भिन्नकांस्यस्वनतुल्यघोषः ।
निरेति वक्रात्सहसा सदोषो
मनीषिभिः कास इति प्रदिष्टः ॥ २ ॥

संख्या-पञ्च कासाः स्मृता वातपित्तश्लेष्मक्षतक्षयैः ।
क्षयायोपेक्षिताः सर्वे बलिनश्चोत्तरोत्तरम् ॥३॥

पूर्वरूपं-पूर्वरूपं भवेत्तेषां शूकपूर्णगलास्यता ।
कण्ठे कण्डूश्च भोज्यानामवरोधश्च जायते ॥ ४ ॥

वातकासः-हृच्छङ्खमूर्ध्वोदरपार्श्वशूली
क्षामाननः क्षीणबलस्वरौजाः ।
प्रसक्तवेगस्तु समीरणेन
भिन्नस्वरः कासति शुष्कमेव ॥ ५ ॥

पित्तकासः-उरोविदाहज्वरवक्त्रशोषै-
रभ्यर्दितस्तिक्तमुखस्तृषार्तः ।
पित्तेन पीतानि वमेत्कटूनि
कासेत्सपाण्डुः परिदह्यमानः ॥ ६ ॥

कफकासः-प्रलिप्यमानेन मुखेन सीदन
शिरोरुजार्तः कफपूर्णदेहः ।
अभक्तरुग्गौरवकण्डुयुक्तः
कासेद् भृशं सान्द्रकफः कफेन ॥ ७ ॥

क्षतकासः-अतिव्यवायभाराध्वयुद्धाश्वगजविग्रहैः ।
रूक्षस्योरःक्षतं वायुर्गृहीत्वा कासमाचरेत् ॥८॥
स पूर्वं कासते शुष्कं ततः ष्ठीवेत्सशोणितम् ।
कण्ठेन रुजताऽत्यर्थं विरुग्णेनेव चोरसा ॥९॥
सूचीभिरिव तीक्ष्णाभिस्तुद्यमानेन शूलिना ।
दुःखस्पर्शेन शूलेन भेदपीडाभितापिना ॥ १० ॥
पर्वभेदज्वरश्वासतृष्णावैस्वर्यपीडितः ।
पारावत इवा कूजन् कासवेगात् क्षतोद्भवात् ॥११॥

क्षतकासः-विषमासात्म्यभोज्यातिव्यवायाद्वेगनिग्रहात् ।
घृणिनां शोचतां नृणां व्यापन्नेऽग्नौ त्रयो मलाः ।

कुपिताः क्षयजं कासं कुर्युर्देहक्षयप्रदम् ॥१२॥

स गात्रशूलज्वरदाहमोहान्
प्राणक्षयं चोपलभेत कासी ।
शुष्यन्विनिष्ठीवति दुर्बलस्तु
प्रक्षीणमांसो रुधिरं सपूयम् ।
तं सर्वलिङ्गं भृशदुश्चिकित्स्यं
चिकित्सितज्ञाः क्षयजं वदन्ति ॥१३॥

इत्येष क्षयजः कासः क्षीणानां देहनाशनः ।
साध्यो बलवतां वा स्याद्याप्यस्त्वेव क्षतोत्थितः
नवौ कदाचित्सिध्येतामपि पादगुणान्वितौ ।
स्थविराणां जराकासः सर्वो याप्यः प्रकीर्तितः ।
त्रीन्पूर्वान्साधयेत्साध्यान् पथ्यैर्याप्यांस्तु यापयेत्

इति श्रीमाधवकरविरचिते माधवनिदाने कासनिदानं समाप्तम् ॥

## अथ हिक्का-श्वास-निदानम्

तद्धेतुः-विदाहिगुरुविष्टम्भिरूक्षाभिष्यन्दिभोजनैः ।
शीतपानाशनस्थानरजोधूमातपानिलैः ॥१॥

व्यायामकर्मभाराध्ववेगाघातापतर्पणैः ।
हिक्का श्वासश्च कासश्च नृणां समुपजायते ॥२॥

हिक्कासम्प्राप्तिः-मुहुर्मुहुर्वायुरुदेति सस्वनो
यकृत्प्लीहान्त्राणि मुखादिवाक्षिपन् ।
स घोषवानाशु हिनस्त्यसून् यतः
ततस्तु हिक्केत्यभिधीयते बुधैः ॥३॥

हिक्का संख्या-अन्नजां यमलां क्षुद्रां गम्भीरां महतीं तथा
वायुः कफेनानुगतः पञ्च हिक्काः करोति हि ॥४॥

हिक्कापूर्वरूपं-कण्ठोरसोर्गुरुत्वं च वदनस्य कषायता ।
हिक्कानां पूर्वरूपाणि कुक्षेराटोप एव च ॥ ५ ॥

अन्नजा-पानान्नैरतिसंयुक्तैः सहसा पीडितोऽनिलः ।
हिक्कयत्यूर्ध्वगो भूत्वा तां विद्यादन्नजां भिषक् ॥

यमला-चिरेण यमलैर्वेगैर्या हिक्का सम्प्रवर्तते ।
कम्पयन्ती शिरो ग्रीवं यमलां तां विनिर्दिशेत् ॥७॥

क्षुद्रिका-प्रकृष्टकालैर्या वेगैर्मन्दैः समभिवर्तते ।
क्षुद्रिका नाम सा हिक्का जत्रुमूलात्प्रधाविता ॥८॥

गम्भीरा-नाभिप्रवृत्ता या हिक्का घोरा गम्भीरनादिनी ।
अनेकोपद्रववती गम्भीरा नाम सा स्मृता ॥६॥

महाहिक्का-मर्माण्युत्पीडयन्तीव सततं या प्रवर्तते ।
महाहिक्केति सा ज्ञेया सर्वगात्रविकम्पिनी ॥१०॥

असाध्यरूपं-आयस्यते हिक्कतो यस्य देहो
दृष्टिश्चोर्ध्वं नाम्यते यस्य नित्यम् ।
क्षीणोऽन्नद्विट् क्षौति यश्चातिमात्रं
तौ द्वौ चान्त्यौ वर्जयेद्धिक्कमानौ ॥११॥

अन्यच्च-अतिसंचितदोषस्य भक्तच्छेदकृशस्य च ।
व्याधिभिः क्षीणदेहस्य वृद्धस्यातिव्यवायिनः ॥
आसां या सा समुत्पन्ना हिक्का हन्त्याशु जीवितम्

अन्यच्च-यमिका च प्रलापार्तिमोहतृष्णासमन्विता ॥१३॥
अक्षीणश्चाप्यदीनश्च स्थिरधात्विन्द्रियश्च यः ।
तस्य साधयितुं शक्या यमिका हन्त्यतोऽन्यथा ॥

श्वाससख्या-महोर्ध्वच्छिन्नतमकक्षुद्रभेदैस्तु पञ्चधा ।
भिद्यते स महाव्याधिः श्वास एको विशेषतः १४॥

तत्रदोषोल्वणता—
वाताधिको भवेत् क्षुद्रस्तमकस्तु कफोद्भवः ।
कफवाताधिकश्चैव संसृष्टश्छिन्नसंज्ञकः ।
श्वासो मारुतसंसृष्टो महानूर्ध्वस्ततो मतः ॥१५॥

तत्पूर्वरूपं-प्राग्रूपं तस्य हृत्पीडा शूलमाध्मानमेव च ।
आनाहो बक्त्रवैरस्यं शङ्खनिस्तोद एव च ॥१६॥

तत्सम्प्राप्तिः-यदा स्रोतांसि संरुध्य मारुतः कफपूर्वकः
विष्वग् व्रजति संरुद्धस्तदा श्वासान् करोति सः

महाश्वासः-उद्धूयमानवातो यः शब्दवद्दुःखितो नरः ।
उच्चैः श्वसिति संरुद्धो मत्तर्षभ इवानिशम् ॥१८॥
प्रनष्टज्ञानविज्ञानस्तथा विभ्रान्तलोचनः ।
विवृताक्ष्याननो बद्धमूत्रवर्चा विशीर्णवाक् ॥१६॥
दीनः प्रश्वसितं चास्य दूराद्विज्ञायते भृशम् ।
महाश्वासोपसृष्टस्तु क्षिप्रमेव विपद्यते ॥२०॥

ऊर्ध्वश्वासः-ऊर्ध्वं श्वसिति यो दीर्घं नच प्रत्याहरत्यधः
श्लेष्मावृतमुखस्रोताः क्रुद्धगन्धवहार्दितः ॥२१॥
ऊर्ध्वदृष्टिर्विपश्यन्तु विभ्रान्ताक्ष इतस्ततः ।
प्रमुह्यन्वेदनार्तश्च शुष्कास्योऽरतिपीडितः ॥२२॥
ऊर्ध्वश्वासे प्रकुपिते ह्यधःश्वासो निरुध्यते ।
मुह्यतस्ताम्यतश्चोर्ध्वं श्वासस्तस्यैव हन्त्यसून् ॥

छिन्नश्वासः-यस्तु श्वसिति विच्छिन्नं सर्वप्राणेन पीड़ितः
न वा श्वसिति दुःखार्तो मर्मच्छेदरुगर्दितः ॥२४॥

आनाहस्वेदमूर्च्छार्तो दह्यमानेन वस्तिना ।
विप्लुताक्षः परिक्षीणः श्वसन् रक्तैकलोचनः ॥२५॥
विचेताः परिशुष्कास्यो विवर्णः प्रलपन्नरः ।
छिन्नश्वासेन विच्छिन्नः स शीघ्रं विजहात्यसून् ॥

तमकश्वासः-प्रतिलोमं यदा वायुः स्रोतांसि प्रतिपद्यते
ग्रीवां शिरश्च संगृह्य श्लेष्माणं समुदीर्य च ॥२७॥
करोति पीनसं तेन रुद्धो घुर्घुरकं तथा ।
अतीव तीव्रवेगं च श्वासं प्राणप्रपीडकम् ॥२८॥
प्रताम्यति स वेगेन तृष्यते सन्निरुध्यते ।
प्रमोहं कासमानश्च स गच्छति मुहुर्मुहुः ॥२९॥
श्लेष्मण्यमुच्यमाने तु भृशं भवति दुःखितः ।
तस्यैव च विमोक्षान्ते मुहूर्तं लभते सुखम् ॥३०॥
तथाऽस्योद्ध्वंसते कण्ठः कृच्छ्राच्छक्नोति भाषितुम्
न चापि लभते निद्रां शयानः श्वासपीडितः ॥३१॥
पार्श्वे तस्यावगृह्णाति शयानस्य समीरणः ।
आसीनो लभते सौख्यमुष्णं चैवाभिनन्दति ॥३२॥
उच्छ्रिताक्षो ललाटेन स्विद्यता भृशमार्तिमान् ।
विशुष्कास्यो मुहुः श्वासो मुहुश्चैवावधम्यते ॥३३॥

मेघाम्बुशीतप्राग्वातैः श्लेष्मलैश्च विवर्धते ।
स याप्यस्तमकः श्वासः साध्यो वा स्यान्नवोत्थितः
प्रतमकः-ज्वरमूर्च्छापरीतस्य विद्यात्प्रतमकं तु तम् ।
तद्धेतुवृद्धि-उदावर्तरजोजीर्णक्लिन्नकायनिरोधजः ॥३५॥
तमसा वर्धतेऽत्यर्थं शीतैश्चाशु प्रशाम्यति ।
सन्तमकः-मज्जतस्तमसीवास्य विद्यात्संतमकं तु तम् ॥

क्षुद्रश्वासः—

रूक्षायासोद्भवः कोष्ठे क्षुद्रो वात उदीरयन् ।
क्षुद्रश्वासो न सोऽत्यर्थं दुःखेनाङ्गप्रबाधकः ॥३७॥
हिनस्ति न स गात्राणि न च दुःखो यथेतरे ।
न च भोजनपानानां निरुणद्ध्युचितां गतिम् ॥३८॥
नेन्द्रियाणां व्यथां नापि कांचिदापादयेद्रुजम् ।
स साध्य उक्तो बलिनः सर्वे चाव्यक्तलक्षणाः ॥

साध्यासाध्यता—

क्षुद्रः साध्यो मतस्तेषां, तमकः कृच्छ्र उच्यते ।
त्रयः श्वासा न सिध्यन्ति, तमको दुर्बलस्य च ॥

श्वासहिक्कयोर्भयंकरता—

कामं प्राणहरा रोगा बहवो न तु ते तथा ।

यथा श्वासश्च हिक्का च हरतः प्राणमाशु च ॥

इति श्रीमाधवकरविरचिते माधवनिदाने
हिक्का-श्वास-निदानं समाप्तम् ॥

---

## अथ स्वरभेद-निदानम् ।

तद्धेतुः—अत्युच्चभाषणविषाध्ययनाभिघात-
संदूषणैः प्रकुपिताः पवनादयस्तु ।
सम्प्राप्तिः—स्रोतःसु ते स्वरवहेषु गताः प्रतिष्ठां
हन्युः स्वरं, भवति चापि हि षड्विधः सः ॥१॥
तत्संख्या—वातादिभिः पृथक् सर्वैर्मेदसा च क्षयेण च ।
वातजः—वातेन कृष्णनयनाननमूत्रवर्चा
भिन्नं शनैर्वदति गर्दभवत् खरं च ।
पित्तजः—पित्तेन पीतनयनाननमूत्रवर्चा
ब्रूयाद्गलेन स च दाहसमन्वितेन ॥२॥
कफजः—ब्रूयात्कफेन सततं कफरुद्धकण्ठः
स्वल्पं शनैर्वदति चापि दिवा विशेषात् ।
त्रिदोषजः—सर्वात्मके भवति सर्वविकारसंपत्

तं चाप्यसाध्यमृषयः स्वरभेदमाहुः ॥३॥

क्षयजः—धूप्येत वाक् क्षयकृते क्षयमाप्नुयाच्च

वागेष चापि हतवाक् परिवर्जनीयः ।

मेदोजः—अन्तर्गतस्वरमलक्ष्यपदं चिरेण

मेदोऽन्वयाद्वदति दिग्धगलस्तृषार्तः ॥४॥

असाध्यः—क्षीणस्य वृद्धस्य कृशस्य वाऽपि

चिरोत्थितो यश्च सहोपजातः ।

मेदस्विनः सर्वसमुद्भवश्च

स्वरामयो यो न स सिद्धिमेति ॥५॥

इति श्रीमाधवकरविरचिते माधवनिदाने

स्वरभेद-निदानं समाप्तम् ।

---

## अथ अरोचक-निदानम् ।

हेतुः—वातादिभिः शोकभयातिलोभ-

क्रोधैर्मनोघ्नाशनरूपगन्धैः ।

अरोचकाः स्युः,

वातजो मुखरसः—

परिहृष्टदन्तः कषायवक्त्रश्च मतोऽनिलेन ॥१॥

पित्तजः—कट्वम्लमुष्णं विरसं च पूति
पित्तेन विद्यातलवणं च वक्त्रम् ।
कफजः—माधुर्यपैच्छिल्यगुरुत्वशैत्य-
विबद्धसंबद्धयुतं कफेन ॥ २ ॥
दोषरूपाणि—हृच्छूलपीडनयुतं पवनेन, पित्ता-
तृड्दाहचोषबहुलं, सकफप्रसेकम् ।
श्लेष्मात्मकं, बहुरुजं बहुभिश्च विद्या-
द्वैगुण्यमोहजडताभिरथापरं च ॥ ३ ॥
आगन्तुजः—अरोचके शोकभयातिलोभ-
क्रोधाद्यहृद्याशुचिगन्धजे स्यात् ।
स्वाभाविकं चास्यमथारुचिश्च,
त्रिदोषजे नैकरसं भवेत्तु ॥ ४ ॥
इति श्रीमाधवकरविरचिते माधवनिदाने
अरोचक-निदानं समाप्तम् ।

---

## अथ-छर्दि-निदानम् ।

तत्संख्या—दुष्टैर्दोषैः पृथक् सर्वैर्बीभत्सालोचनादिभिः ।
छर्दयः पञ्च विज्ञेयास्तासां लक्षणमुच्यते ॥१॥

कारणम्—अतिद्रवैरतिस्निग्धैरहृद्यैर्लवणैरति ।
अकाले चातिमात्रैश्च तथाऽसात्म्यैश्च भोजनैः ॥२॥
श्रमाद्भयात्तथोद्वेगादजीर्णात् क्रिमिदोषतः ।
नार्याश्चापन्नसत्त्वायास्तथाऽतिद्रुतमश्नतः ॥३॥
बीभत्सैर्हेतुभिश्चान्यैर्द्रुतमुत्क्लेशितो बलात् ।

छर्दिनिरुक्तिः—छादयन्नाननं वेगैरर्दयन्नङ्गभञ्जनैः ।
निरुच्यते छर्दिरिति दोषो वक्त्रं प्रधावितः ॥४॥

पूर्वरूपं—हृल्लासोद्गाररोधौ च प्रसेको लवणस्तनुः ।
द्वेषोऽन्नपाने च भृशं वमीनां पूर्वलक्षणम् ॥५॥

वातजा—हृत्पार्श्वपीडामुखशोषशीर्ष-
नाभ्यर्तिकासस्वरभेदतोदैः ।
उद्गारशब्दप्रबलं सफेनं
विच्छिन्नकृष्णं तनुकं कषायम् ।
कृच्छ्रेण चाल्पं महता च वेगे-
नार्तोऽनिलाच्छर्दयतीह दुःखम् ॥ ६ ॥

पित्तजा—मूर्च्छापिपासामुखशोषमूर्ध-
ताल्वक्षिसन्तापतमोभ्रमार्त्तः ।
पीतं भृशोष्णं हरितं सतिक्तं

धूम्रं च पित्तेन वमेत्सदाहम् ॥ ७ ॥

कफजा—तन्द्रास्यमाधुर्यकफप्रसेक-

सन्तोषनिद्रारुचिगौरवार्त्तः ।

स्निग्धं घनं स्वादु कफाद्विशुद्धं

सरोमहर्षोऽल्परुजं वमेत्तु ॥ ८ ॥

सर्वजा—शूलाविपाकारुचिदाहतृष्णा

श्वासप्रमोहप्रबला प्रसक्तम् ।

छर्दिस्त्रिदोषाल्लवणाम्लनील-

सान्द्रोष्णरक्तं वमतां नृणां स्यात् ॥ ९ ॥

असाध्यं छर्दिमन्तमाह—विट्स्वेदमूत्राम्बुवहानि वायुः

स्रोतांसि संरुध्य यदोर्ध्वमेति ।

उत्सन्नदोषस्य समाचितं तं

दोषं समुद्धूय नरस्य कोष्ठात् ॥ १० ॥

विण्मूत्रयोस्तत्समगन्धवर्णं

तृट्श्वासहिक्कार्तियुतं प्रसक्तम् ।

प्रच्छर्दयेद्दुष्टमिहातिवेगा-

त्तयाऽर्दितश्चाशु विनाशमेति ॥ ११ ॥

आगन्तुजां छर्दिमाह—बीभत्सजा दौर्हृदजाऽऽमजा च

ह्यसात्म्यजा च क्रिमिजा च या हि ।
सा पञ्चमी तां च विभावयेच्च
दोषोच्छ्रयेणैव यथोक्तमादौ ॥ १२ ॥

क्रिमिजा—शूलहृल्लासबहुला क्रिमिजा च विशेषतः ।
क्रिमिहृद्रोगतुल्येन लक्षणेन च लक्षिता ॥ १३ ॥

पुनरसाध्यां छर्दिमाह—क्षीणस्य या छर्दिरतिप्रसक्ता
सोपद्रवा शोणितपूययुक्ता ।
सचन्द्रिकां तां प्रवदेदसाध्यां,
साध्यां चिकित्सेन्निरुपद्रवां च ॥

इति श्रीमाधवकरविरचिते-माधवनिदाने छर्दिनिदानं समाप्तम् ॥

---

## अथ तृष्णा-निदानम् ।

तद्धेतुः—भयश्रमाभ्यां बलसंक्षयाद्वा
ह्यूर्ध्वं चितं पित्तविवर्धनैश्च ।
पित्तं सवातं कुपितं नराणां
तालुप्रपन्नं जनयेत्पिपासाम्

सम्प्राप्ति-स्रोतस्स्वपांवाहिषु दूषितेषु
दोषैश्च तृट्संभवतीह जन्तोः ॥ १ ॥
संख्या-तिस्रः स्मृतास्ताः क्षतजा चतुर्थी
क्षयात्तथा ह्यामसमुद्भवा च ।
भक्तोद्भवा सप्तमिकेति तासां
निबोध लिङ्गान्यनुपूर्वशस्तु ॥ २ ॥
वातजा-क्षामास्यता मारुतसंभवायां
तोदस्तथा शङ्खशिरःसु चापि ।
स्रोतोनिरोधो विरसं च वक्त्रं
शीताभिरद्भिश्च विवृद्धिमेति ॥ ३ ॥
पित्तजा-मूर्च्छान्नविद्वेषविलापदाहा
रक्तेक्षणत्वं प्रततश्च शोषः ।
शीताभिनन्दा मुखतिक्तता च
पित्तात्मिकायां परिदूयनं च ॥ ४ ॥
कफजा-वाष्पावरोधात्कफसंवृतेऽग्नौ
तृष्णा बलासेन भवेत्तथा तु ।
निद्रा गुरुत्वं मधुरास्यता च
तृष्णार्दितः शुष्यति चातिमात्रम् ॥ ५ ॥

क्षतजा-क्षतस्य रुक्शोणितनिर्गमाभ्यां

तृष्णा चतुर्थी क्षतजा मता तु ।

क्षयजा-रसक्षयाद्या क्षयसंभवा सा

तयाऽभिभूतश्च निशादिनेषु ॥ ६ ॥

पेपीयतेऽम्भः स सुखं न याति

तां सन्निपातादिति केचिदाहुः ।

रसक्षयोक्तानि च लक्षणानि

तस्यामशेषेण भिषग्व्यवस्येत् ॥ ७ ॥

आमजा-त्रिदोषलिङ्गाऽऽमसमुद्भवा च

हृच्छूलनिष्ठीवनसादकर्त्री ।

भक्तजा-स्निग्धं तथाऽम्लं लवणं च भुक्तं

गुर्वन्नमेवाशु तृषां करोति ।

कष्टसाध्या-

दीनस्वरः प्रताम्यन् दीनः संशुष्कवक्त्रगलतालुः

भवति खलु योपसर्गात्तृष्णा सा शोषिणी कष्टा ॥

असाध्यास्ताः-

ज्वरमोहक्षयकासश्वासाद्युपसृष्टदेहानाम् ।

सर्वास्त्वतिप्रसक्ता रोगकृशानां वमिप्रयुक्तानाम्

घोरोपद्रवयुक्तास्तृष्णा मरणाय विज्ञेयाः ॥१०॥
इति श्रीमाधवकरविरचिते माधवनिदाने
तृष्णानिदानं समाप्तम् ॥

---

# अथ मूर्च्छा-भ्रम-निद्रा-तन्द्रा संन्यास-निदानम् ।

मूर्छाहेतुः-क्षीणस्य बहुदोषस्य विरुद्धाहारसेविनः ।
वेगाघातादभिघाताद्धीनसत्त्वस्य वा पुनः ॥१॥
मूर्छासम्प्राप्तिः-करणायतनेषूग्रा बाह्येष्वाभ्यन्तरेषु च ।
निविशन्ते यदा दोषास्तदा मूर्च्छन्ति मानवाः ॥
संज्ञावहासु नाडीषु पिहितास्वनिलादिभिः ।
तमोऽभ्युपैति सहसा सुखदुःखव्यपोहकृत् ॥३॥
सुखदुःखव्यपोहाच्च नरः पतति काष्ठवत् ।
मोहो मूर्च्छेति तामाहुः षड्विधा सा प्रकीर्तिता ॥
मूर्च्छासंख्या-वातादिभिः शोणितेन मद्येन च विषेण च ।
षट्स्वप्येतासु पित्तं तु प्रभुत्वेनावतिष्ठते ॥ ५ ॥
मूर्छापूर्वरूपं-हृत्पीडा जृम्भणं ग्लानिः संज्ञादौर्बल्यमेव च

सर्वासां पूर्वरूपाणि यथास्वं च विभावयेत् ॥

वातमूर्छा-नीलं वा यदि वा कृष्णमाकाशमथवाऽरुणम् ।
पश्यंस्तमः प्रविशति शीघ्रं च प्रतिबुध्यते ॥ ७ ॥
वेपथुश्चाङ्गमर्दश्च प्रपीडा हृदयस्य च ।
कार्श्यं श्यावाऽरुणाच्छाया मूर्च्छाये वातसंभवे ॥८॥

पित्तमूर्छा-रक्तं हरितवर्णं वा वियत्पीतमथापि वा ।
पश्यंस्तमः प्रविशति सस्वेदश्च प्रबुध्यते ॥ ९ ॥
सपिपासः ससन्तापो रक्तपीनाकुलेक्षणः ।
संभिन्नवर्चाः पीताभो मूर्च्छाये पित्तसंभवे ॥१०॥

कफमूर्छा-मेघसंकाशमाकाशमावृतं वा तमोघनैः ।
पश्यंस्तमः प्रविशति चिराच्च प्रतिबुध्यते ॥११॥
गुरुभिः प्रावृतैरङ्गैर्यथैवार्द्रेण चर्मणा ।
सप्रसेकः सहृल्लासो मूर्च्छाये सफसंभवे ॥१२॥

त्रिदोषमूर्छा-सर्वाकृतिः सन्निपातादपस्मार इवागतः ।
स जन्तुं पातयत्याशु विना बीभत्सचेष्टितैः ॥१३॥

रक्तजमूर्छा हेतुः-पृथिव्यापस्तमोरूपं रक्तगन्धस्तदन्वयः ।
तस्माद्रक्तस्य गन्धेन मूर्च्छन्ति भुवि मानवाः ॥१४
द्रव्यस्वभाव इत्येके दृष्ट्वा यदभिमुह्यति ।

विषसद्यमूर्छा-गुणास्तीव्रतरत्वेन स्थितास्तु विषमद्ययोः
त एव तस्मात्ताभ्यां तु मोहौ स्यातां यथेरितौ ।

रक्तमूर्छारूपं—

स्तब्धाङ्गदृष्टिस्त्वसृजा गूढोच्छ्वासश्च मूर्च्छितः ॥
मद्यमूर्छारूपं-मद्येन विलपंश्छेते नष्टविभ्रान्तमानसः ।
गात्राणि विक्षिपन् भूमौ जरां यावन्न याति तत् ॥१७॥
विषमूर्छारूपं-वेपथुस्वप्नतृष्णाः स्युस्तमश्च विषमूर्च्छिते
वेदितव्यं तीव्रतरं यथास्वं विषलक्षणैः ॥ १८ ॥

तत्र दोषाधिक्यं—

मूर्च्छा पित्ततमः प्राया, रजःपित्तानिलाद्भ्रमः ।
तमोवातकफात्तन्द्रा, निद्रा श्लेष्मतमोभवा ॥ १९ ॥
भ्रमरोगः-चक्रवद्भ्रमतो गात्रं भूमौ पतति सर्वदा ।
भ्रमरोग इति ज्ञेयो रजः पित्तानिलात्मकः ॥२०॥
तन्द्रारोगः-इन्द्रियार्थेष्वसंवित्तिर्गौरवं जृम्भणं क्लमः ।
निद्रार्तस्येव यस्येहा तस्य तन्द्रां विनिर्दिशेत् ॥२१॥
मूर्छासंन्यासभेदः-दोषेषु मदमूर्च्छाया कृतवेगेषु देहिनाम्
स्वयमेवोपशाम्यन्ति संन्यासो नौषधैर्विना ॥ २२ ॥
संन्यासरूपं-वाग्देहमनसां चेष्टा माक्षिप्यातिबला मलाः

संन्यस्यन्त्यबलं जन्तुं प्राणायतनमाश्रिताः ।। २३ ।।
स ना संन्याससंन्यस्तः काष्ठीभूतो मृतोपमः ।
प्राणैर्विमुच्यते शीघ्रं मुक्त्वा सद्यःफलां क्रियाम् ।। २४ ।।

इति श्रीमाधवकरविरचिते-माधवनिदाने
मूर्च्छा-भ्रम-निद्रा-तन्द्रा-संन्यास-
निदानं समाप्तम् ।

---

## अथ-पानात्यय-परमद-पानाजीर्ण-पानविभ्रम-निदानम् ।

मदात्ययहेतुः—

ये विषस्य गुणाः प्रोक्तास्तेऽपि मद्ये प्रतिष्ठिताः ।
तेन मिथ्योपयुक्तेन भवत्युग्रो मदात्ययः ।। १ ।।

मद्यस्वभावः—

किंतु मद्यं स्वभावेन यथैवान्नं तथा स्मृतम् ।

तत्कुयोगसद्योगफलं—

अयुक्तियुक्तं रोगाय युक्तियुक्तं यथाऽमृतम् ।। २ ।।
प्राणाः प्राणभृतामन्नं तदयुक्त्या हिनस्त्यसून् ।

विषं प्राणहरं तच्च युक्तियुक्तं रसायनम् ॥ ३ ॥
विधिना मात्रया काले हितैरन्नैर्यथानलम् ।
प्रहृष्टो यः पिबेन्मद्यं तस्य स्यादमृतोपमम् ॥ ४ ॥
स्निग्धैस्तदन्नैर्मांसैश्च भक्ष्यैश्च सह सेवितम् ।
भवेदायुःप्रकर्षाय बलायोपचयाय च ॥ ५ ॥
काम्यता मनसस्तुष्टिस्तेजो विक्रम एव च ।
विधिवत्सेव्यमाने तु मद्ये संनिहिता गुणाः ॥ ६ ॥

प्रथममदः—

बुद्धिस्मृतिप्रीतिकरः सुखश्च पानान्ननिद्रारतिवर्धनश्च
संपाठगीतस्वरवर्धनश्चप्रोक्तोऽतिरम्यः प्रथमो मदो हि

मध्यमदः-अव्यक्तबुद्धिस्मृतिवाग्विचेष्टः
सोन्मत्तलीलाकृतिरप्रशान्तः ।
आलस्यनिद्राभिहतो मुहुश्च
मध्येन मत्तः पुरुषो मदेन ॥ ८ ॥

तृतीयमदः-गच्छेदगम्यान्न गुरूंश्च मन्येत्
खादेदभक्ष्याणि च नष्टसंज्ञः ।
ब्रूयाच्च गुह्यानि हृदि स्थितानि
मदे तृतीये पुरुषोऽस्वतन्त्रः ॥ ९ ॥

चतुर्थमदः-चतुर्थे तु मदे मूढो भग्नदार्विव निष्क्रियः ।
कार्याकार्यविभागज्ञो मृतादप्यपरो मृतः १० ॥

को मदं तादृशं गच्छेदुन्मादमिव चापरम् ।
बहुदोषमिवामूढः कान्तारं स्ववशः कृती ॥ ११ ॥

मदात्ययादिहेतुः-निर्भक्तमेकान्तत एव मद्यं
निषेव्यमाणं मनुजेन नित्यम् ।
आपादयेत्कष्टतमान्विकारा-
नापादयेच्चापि शरीरभेदम् ॥ १२ ॥

क्रुद्धेन भीतेन पिपासितेन
शोकाभितप्तेन बुभुक्षितेन ।
व्यायामभाराध्वपरिक्षतेन
वेगावरोधाभिहतेन चापि ॥ १३ ॥

अत्यम्बुभक्ष्यावततोदरेण
साजीर्णभुक्तेन तथाऽबलेन ।
उष्णाभितप्तेन च सेव्यमानं
करोति मद्यं विविधान्विकारान् ॥ १४ ॥

नामनिर्देशः-पानात्ययं परमदं पानाजीर्णमथापि वा ।
पानविभ्रममुग्रं च तेषां वक्ष्यामि लक्षणम् ॥ १५ ॥

वातप्रायमदात्ययः—

हिक्काश्वासशिरःकम्पपार्श्वशूलप्रजागरैः ।

विद्याद्बहुप्रलापस्य वातप्रायं मदात्ययम् ॥१६॥

पित्तप्रायमदा०-तृष्णादाहज्वरस्वेदमोहातीसारविभ्रमैः ।

विद्याद्धरितवर्णस्य पित्तप्रायं मदात्ययम् ॥१७॥

कफप्रायमदा०-छर्द्यरोचकहृल्लासतन्द्रास्तैमित्यगौरवैः ।

विद्याच्छीतपरीतस्य कफप्रायं मदात्ययम् ।

त्रिदोषजमदा०-ज्ञेयस्त्रिदोषजश्चापि सर्वलिङ्गैर्मदात्ययः

परमदलक्षणं-श्लेष्मोच्छ्रयोऽङ्गगुरुता विरसास्यता च

विण्मूत्रसक्तिरथ तन्द्रिररोचकश्च ।

लिङ्गं परस्य च मदस्य वदन्ति तज्ज्ञा-

स्तृष्णा रुजा शिरसि सन्धिषु चापि भेदः ॥१८॥

पानाजीर्णरूपं-आध्मानमुग्रमथ चोद्गिरणं विदाहः

पानेऽजरां समुपगच्छति लक्षणानि ।

पानविभ्रमरूपं हृद्गात्रतोदकफसंस्रवकण्ठधूमा-

मूर्च्छावमिज्वरशिरोरुजनप्रदाहाः ॥२०॥

द्वेषः सुरान्नविकृतेष्वपि तेषु तेषु

तं पानविभ्रममुशन्त्यखिलेन धीराः ।

असाध्यरूप-हीनोत्तरौष्ठमतिशीतममन्ददाहं
तैलप्रभास्यमपि पानहतं त्यजेत्तु ॥२१॥

मद्यहतोपद्रवाः-जिह्वौष्ठदन्तमसितं त्वथवाऽपि नीलं
पीते च यस्य नयने रुधिरप्रभे वा ।
हिक्काज्वरौ वमथुवेपथुपार्श्वशूलाः
कासभ्रमावपि च पानहतं भजन्ते ॥२२॥

इति श्रीमाधवकरविरचिते-माधवनिदाने
पानात्यय-परमद-पानाजीर्ण
पानविभ्रम-निदानं समाप्तम् ॥

---

## अथ दाह-निदानम् ।

मद्यजदाहः—

त्वचं प्राप्तः स पानोष्मा पित्तरक्ताभिमूर्च्छितः ।
दाहं प्रकुरुते घोरं पित्तवत्तत्र भेषजम् ॥१॥

रक्तजदाहः-कृत्स्नदेहानुगं रक्तमुद्रिक्तं दहति ध्रुवम् ।
स उष्यते तृष्यते च ताम्राभस्ताम्रलोचनः ॥२॥

लोहगन्धाङ्गवदनो वह्निनेवावकीर्यते ।

पित्तजदाहः—

पित्तज्वरसमः पित्तात्स चाप्यस्य विधिः स्मृतः

तृष्णारोधजः—

तृष्णानिरोधादब्धातौ क्षीणे तेजः समुद्धतम् ।
स बाह्याभ्यन्तरं देहं प्रदहेन्मन्दचेतसः ॥४॥
संशुष्कगलताल्वोष्ठो जिह्वां निष्कृष्य वेपते ।

रक्तपूर्णकोष्ठजः—

असृजः पूर्णकोष्ठस्य दाहोऽन्यः स्यात्सुदुस्तरः ॥

धातुक्षयजः-धातुक्षयोक्तो यो दाहस्तेन मूर्च्छातृडर्दितः
क्षामस्वरः क्रियाहीनः स सीदेद् भृशपीडितः ॥

मर्माभिघातजः—

मर्माभिघातजोऽप्यस्ति सोऽसाध्यः सप्तमो मतः

तदसाध्यरूपं—

सर्व एव च वर्ज्याः स्युः शीतगात्रस्य देहिनः ॥

इति श्रीमाधवकरविरचिते-माधवनिदाने
दाहनिदानं समाप्तम् ॥

# अथ उन्माद-निदानम् ।

उन्मादनिरुक्तिः—

मदयन्त्युद्धता दोषा यस्मादुन्मार्गमागताः ।
मानसोऽयमतो व्याधिरुन्माद इति कीर्तितः ॥१॥

तत्संख्या-एकैकशः सर्वशश्च दोषैरत्यर्थमूर्च्छितैः ।
मानसेन च दुःखेन स च पञ्चविधो मतः ॥२॥
विषाद्भवति षष्ठश्च यथास्वं तत्र भेषजम् ।

मदरोग-स च चाप्रवृद्धस्तरुणो मदसंज्ञां बिभर्ति च ॥३॥

कारणं-विरुद्धदुष्टाशुचि भोजनानि
प्रधर्षणं देवगुरुद्विजानाम् ।
उन्मादहेतुर्भयहर्षपूर्वो
मनोऽभिघातो विषमाश्च चेष्टाः ॥४॥

सम्प्राप्तिः-तैरल्पसत्त्वस्य मलाः प्रदुष्टा
बुद्धेर्निवासं हृदयं प्रदूष्य ।
स्रोतांस्यधिष्ठाय मनोवहानि
प्रमोहयन्त्याशु नरस्य चेतः ॥५॥

सामान्यरूपं-धीविभ्रमः सत्त्वपरिप्लवश्च
पर्याकुला दृष्टिरधीरता च ।

अबद्धवाक्त्वं हृदयं च शून्यं
सामान्यमुन्मादगदस्य लिङ्गम् ॥६॥

वातजहेतुः-रूक्षाल्पशीतान्नविरेकधातु-
क्षयोपवासैरनिलोऽतिवृद्धः ।
चिन्तादिदुष्टं हृदयं प्रदूष्य
बुद्धिं स्मृतिं चाप्युपहन्ति शीघ्रम् ॥७॥

वातजरूपं-अस्थानहास्यस्मितनृत्यगीत-
वागङ्गविक्षेपणरोदनानि ।
पारुष्यकार्श्यारुणवर्णताश्च
जीर्णे बलं चानिलजस्य रूपम् ॥८॥

पित्तजहेतुः-अजीर्णकट्वम्लविदाह्यशीतै-
र्भोज्यैश्चितं पित्तमुदीर्णवेगम् ।
उन्मादमत्युग्रमनात्मकस्य
हृदि स्थितं पूर्ववदाशु कुर्यात् ॥९॥

पित्तजरूपं-अमर्षसंरम्भविनग्नभावाः
सन्तर्जनातिद्रवणौष्ण्यरोषाः ।
प्रच्छायशीतान्नजलाभिलाषः
पीता च भाः पित्तकृतस्य लिङ्गम् ॥१०॥

कफजहेतुः-संपूरणैर्मन्दविचेष्टितस्य
सोष्मा कफो मर्मणि संप्रदुष्टः ।
बुद्धिं स्मृतिं चाप्युपहत्य चित्तं
प्रमोहयन् संजनयेद्विकारम् ॥११॥

कफजरूपं-वाक्चेष्टितं मन्दमरोचकश्च
नारीविविक्तप्रियताऽतिनिद्रा ।
छर्दिश्च लाला च बलं च भुक्ते
नखादिशौक्ल्यं च कफात्मके स्यात् ॥१२॥

त्रिदोषजहेतुरूपे-यः सन्निपातप्रभवोऽतिघारः
सर्वैः समस्तैः स च हेतुभिः स्यात् ।
सर्वाणि रूपाणि बिभर्ति तादृ-
ग्विरुद्धभैषज्यविधिर्विवर्ज्यः ॥१३॥

भयशोककामजः-चौरैर्नरेन्द्रपुरुषैररिभिस्तथाऽन्यै-
र्वित्रासितस्य धनबान्धवसंक्षयाद्वा ।
गाढं क्षते मनसि च प्रियया रिरंसो-
र्जायेत चोत्कटतमो मनसो विकारः ॥१४॥

तल्लक्षणम्-चित्रं ब्रवीति च मनोऽनुगतं विसंज्ञो
गायत्यथो हसति रोदिति चापि मूढः ।

विषजलक्षणम्—रक्तेक्षणो हतबलेन्द्रियभाः सुदीनः ।
श्यावाननो विषकृतेऽथ भवेद्द्विसंज्ञः ॥ १५ ॥
असाध्यरूपं—अवाञ्ची वाप्युदञ्ची वा क्षीणमांसबलो नरः
जागरूको ह्यसंदेहमुन्मादेन विनश्यति ॥ १६ ॥
भूतजः—अमर्त्यवाग्विक्रमवीर्यचेष्टो
ज्ञानादिविज्ञानबलादिभिर्यः ।
उन्मादकालोऽनियतश्च यस्य
भूतोत्थमुन्मादमुदाहरेत्तम् ॥ १७ ॥
देवग्रहजुष्टः—संतुष्टः शुचिरतिदिव्यमाल्यगन्धो
निस्तन्द्रीरवितथसंस्कृतप्रभाषी ।
तेजस्वी स्थिरनयनो वरप्रदाता
ब्रह्मण्यो भवति नरः स देवजुष्टः ॥ १८ ॥
असुरजुष्टः—संस्वेदी द्विजगुरुदेवदोषवक्ता
जिह्माक्षो विगतभयो विमार्गदृष्टिः ।
संतुष्टो न भवति चान्नपानजात-
दुष्टात्मा भवति स देवशत्रुजुष्टः ॥ १९ ॥
गन्धर्वजुष्टः—हृष्टात्मा पुलिनवनान्तरोपसेवी
स्वाचारः प्रियपरिगीतगन्धमाल्यः ।

नृत्यन्वै प्रहसति चारु चाल्पशब्दं
गन्धर्वग्रहपरिपीडितो मनुष्यः ॥ २० ॥

यक्षग्रहजुष्टः—ताम्राक्षः प्रियतनुरक्तवस्त्रधारी
गम्भीरो द्रुतगतिरल्पवाक् सहिष्णुः ।
तेजस्वी वदति च किं ददामि कस्मै
यो यक्षग्रहपरिपीडितो मनुष्यः ॥ २१ ॥

पितृग्रहजुष्टः—प्रेतानां स दिशति संस्तरेषु पिण्डान्
शान्तात्मा जलमपि चापसव्यवस्त्रः ।
मांसेप्सुस्तिलगुडपायसाभिकाम-
स्तद्भक्तो भवति पितृग्रहाभिजुष्टः ॥२२॥

सर्पग्रहजुष्टः—यस्तूर्व्यां प्रसरति सर्पवत्कदाचित्
सृक्कण्यौ विलिहति जिह्वया तथैव ।
क्रोधालुर्गुडमधुदुग्धपायसेप्सु-
र्ज्ञातव्यो भवति भुजङ्गमेन जुष्टः ॥२३॥

राक्षसजुष्टः—मांसासृग्विविधसुराविकारलिप्सु-
र्निर्लज्जो भृशमतिनिष्ठुरोऽतिशूरः ।
क्रोधालुर्विपुलबलो निशाविहारी
शौचद्विड् भवति स राक्षसैर्गृहीतः ॥२४॥

पिशाचजुष्टः—उद्ध्वस्तः कृशपरुषोऽचिरप्रलापी
दुर्गन्धो भृशमशुचिस्तथाऽतिलोलः ।
बह्वाशी विजनवनान्तरोपसेवी
व्याचेष्टन् भ्रमति रुदन् पिशाचजुष्टः ॥२५॥

असाध्यभूतोन्मादो—स्थूलाक्षो द्रुतमटनः स फेनलेही
निद्रालुः पतति च कम्पते च यो हि ।
यश्चाद्रिद्विरदनगादि विच्युतः स्यात्
सोऽसाध्यो भवति तथा त्रयोदशाब्दे ॥२६॥

ग्रहावेशकालाः-देवग्रहाः पौर्णमास्यामसुराः सन्ध्ययोरपि
गन्धर्वाः प्रायशोऽष्टम्यां यक्षाश्च प्रतिपद्यथ ॥ २७ ॥
पित्र्याः कृष्णक्षये हिंस्युः पञ्चम्यामपि चोरगाः ।
रक्षांसि रात्रौ पैशाचाश्चतुर्दश्यां विशन्ति हि ॥ २८ ॥

ग्रहावेशप्रकारः—

दर्पणादीन् यथा छाया शीतोष्णं प्राणिनो यथा ।
स्वमणिं भास्करार्चिश्च यथा देहं च देहधृक् ।
विशन्ति च न दृश्यन्ते ग्रहास्तद्वच्छरीरिणः ॥२९॥

इति श्रीमाधवकरविरचिते-माधवनिदाने
उन्माद-निदानं समाप्तम् ।

# अथ अपस्मार-निदानम् ।

हेतुः—चिन्ताशोकादिभिर्दोषाः क्रुद्धाहृत्स्रोतसि स्थिताः
कृत्वा स्मृतेरपध्वंसमपस्मारं प्रकुर्वते ॥१॥
सामान्यलिंगं संख्या च—
तमः प्रवेशः संरम्भो दोषोद्रेकहृतस्मृतेः ।
अपस्मार इति ज्ञेयो गदो घोरश्चतुर्विधः ॥२॥
पूर्वरूपं—हृत्कम्पः शून्यता स्वेदो ध्यानं मूर्च्छा प्रमूढता ।
निद्रानाशश्च तस्मिश्च भविष्यति भवत्यथ ॥३॥
वातजरूपं—कम्पते प्रदशेद्दन्तान् फेनोद्वामी श्वसित्यपि ।
परुषारुणकृष्णानि पश्येद्रूपाणि चानिलात् ॥४॥
पित्तजरूपं—पीतफेनाङ्गवक्त्राक्षः पीतासृग्रूपदर्शकः ।
सतृष्णोष्णानलव्याप्तलोकदर्शी च पैत्तिकः ॥५॥
कफजरूपं—शुक्लफेनाङ्गवक्त्राक्षः शीतहृष्टाङ्गजो गुरुः ।
पश्येच्छुक्लानि रूपाणि श्लैष्मिको मुच्यते चिरात् ॥
त्रिदोषजरूपं—सर्वैरेतैः समस्तैश्च लिङ्गैर्ज्ञेयस्त्रिदोषजः ।
अपस्मारः स चासाध्योयः क्षीणस्यानवश्च यः ॥
असाध्यरूपं—प्रस्फुरन्तं सुबहुशः क्षीणं प्रचलितभ्रुवम् ।

नेत्राभ्यां च विकुर्वाणमपस्मारो विनाशयेत् ॥८॥

वेगकालाः—पक्षाद्वा द्वादशाहाद्वा मासाद्वा कुपिता मलाः ।
अपस्माराय कुर्वन्ति वेगं किंचिदथान्तरम् ॥६॥

सदाऽवेगे हेतुः—

देवे वर्षत्यपि यथा भूमौ वीजानि कानिचित् ।
शरदि प्रतिरोहन्ति तथा व्याधिसमुच्छ्रयाः ॥१०॥

इति श्रीमाधवकरविरचिते-माधवनिदाने-
अपस्मार-निदानं समाप्तम् ।

——

## अथ वातव्याधि-निदानम् ।

कारणम्—रूक्षशीताल्पलध्वन्नव्यवायातिप्रजागरैः ।
विषमादुपचाराच्च दोषासृक्स्रावणादपि ॥१॥
लंघनप्लवनात्यध्वव्यायामादिविचेष्टितैः ।
धातूनां संक्षयाच्चिन्ताशोकरोगातिकर्षणात् ॥२॥
वेगसंधारणादामादभिघातादभोजनात् ।
मर्माबाधाद्गजोष्ट्राश्वशीघ्रयानापतंसनात् ॥३॥

सम्प्राप्तिः—देहे स्रोतांसि रिक्तानि पूरयित्वाऽनिलो बली

करोति विविधान् व्याधीन सर्वाङ्गैकाङ्गसंश्रयान्

पूर्वरूपं--अव्यक्तं लक्षणं तेषां पूर्वरूपमिति स्मृतम् ।
आत्मरूपं तु यद्व्यक्तमपायो लघुता पुनः ॥५॥

सामान्यरूपं—

संकोचः पर्वणां स्तम्भो भङ्गोऽस्थ्नां पर्वणामपि ।
रोमहर्षः प्रलापश्च पाणिपृष्ठशिरोग्रहः ॥६॥
खाञ्ज्यपाङ्गुल्यकुब्जत्वं शोथोऽङ्गानामनिद्रता ।
गर्भशुक्ररजोनाशः स्पन्दनं गात्रसुप्तता ॥७॥
शिरोनासाक्षिजत्रूणां ग्रीवायाश्चापि हुण्डनम् ।
भेदस्तोदोऽर्तिराक्षेपो मुहुश्चायास एव च ॥८॥
एवंविधानि रूपाणि करोति कुपितोऽनिलः ।
हेतुस्थानविशेषाच्च भवेद्रोगविशेषकृत् ॥९॥

कोष्ठवायुरोगः—तत्र कोष्ठाश्रिते दुष्टे निग्रहो मूत्रवर्चसोः ।
ब्रध्नहृद्रोगगुल्मार्शः पार्श्वशूलं च मारुते ॥१०॥

सर्वाङ्गवातरोगः—सर्वाङ्गकुपिते वाते गात्रस्फुरणभञ्जनम्
वेदनाभिः परीताश्च स्फुटन्तीवास्य सन्धयः ॥११॥

गुदवातरोगः—ग्रहो विण्मूत्रवातानां शूलाध्मानाश्मशर्कराः
जङ्घोरुत्रिकपात्पृष्ठरोगशोषो गुदे स्थिते ॥१२॥

आमाशयवातरोगः—

रुक् पार्श्वोदरहृन्नाभेस्तृष्णोद्गारविसूचिकाः ।
कासः कण्ठास्यशोषश्च श्वासश्चामाशयस्थिते ॥

पक्वाशयवातरोगः—

पक्वाशयस्थोऽन्त्रकूजं शूलाटोपौ करोति च ।
कृच्छ्रमूत्रपुरीषत्वमानाहं त्रिकवेदनाम् ॥१४॥

इन्द्रियवातरोगः—

श्रोत्रादिष्विन्द्रियवधं कुर्याद् दुष्टसमीरणः ।

त्वग्गतवातरोगः—

त्वग्रूक्षा स्फुटिता सुप्ता कृशा कृष्णा च तुद्यते ।
आतन्यते सरागा च पर्वरुक् त्वग्गतेऽनिले ॥१५॥

रक्तगतवातः—रुजस्तीव्राः ससन्तापा वैवर्ण्यं कृशताऽरुचिः
गात्रे चारूंषि भुक्तस्य स्तम्भश्चासृग्गतेऽनिले ॥

मांसमेदोगतवातः—गुर्वङ्गं तुद्यतेऽत्यर्थं दण्डमुष्टिहतं यथा
सरुक् श्रमितमत्यर्थं मांसमेदोगतेऽनिले ॥१७॥

अस्थिमज्जवातः—भेदोऽस्थिपर्वणां सन्धिशूलं मांसबलक्षयः
अस्वप्नः संतता रुक् च मज्जास्थिकुपितेऽनिले ॥

शुक्रगतवातः—क्षिप्रं मुञ्चति बध्नाति शुक्रं गर्भमथापि वा

वायुना दारुणं प्राहुरेके तदपतानकम् ।

दण्डापतानकः

कफान्वितो भृशं वायुस्तास्वेव यदि तिष्ठति ॥३२॥

दण्डवत्स्तम्भयेद्देहं स तु दण्डापतानकः

धनुःस्तम्भः—धनुस्तुल्यं नमेद्यस्तु स धनुःस्तम्भसंज्ञकः

(आभ्यन्तरायामः)-अङ्गुलीगुल्फजठरहृद्वक्षोगलसंश्रितः

स्नायुप्रतानमनिलो यदाऽऽक्षिपति वेगवान् ॥ ३४ ॥

विष्टब्धाक्षः स्तब्धहनुर्भग्नपार्श्वः कफं वमन् ।

अभ्यन्तरं धनुरिव यदा नमति मानवम् ॥ ३५ ॥

तदाऽस्याभ्यन्तरायामं कुरुते मारुतो बली ।

(बाह्यायामः-बाह्यस्नायुप्रतानस्थो बाह्यायामं करोति च

तमसाध्यं बुधाः प्राहुर्वक्षःकट्यूरुभञ्जनम् ।

अभिघातजाक्षेपः—

कफपित्तान्वितो वायुर्वायुरेव च केवलः ॥ ३७ ॥

कुर्यादाक्षेपकं त्वन्यं चतुर्थमभिघातजम्

तदसाध्यरूपं-गर्भपातनिमित्तश्च शोणितातिस्रवाच्च यः

अभिघातनिमित्तश्च न सिध्यत्यपतानकः ।

पक्षाघातः—गृहीत्वाऽर्धं तनोर्वायुः सिराः स्नायूर्विशोष्य च

पक्षमन्यतरं हन्ति सन्धिबन्धान्विमोक्षयन् ।
कृत्स्नोऽर्धकायस्तस्य स्यादकर्मण्यो विचेतनः ॥४०
एकाङ्गरोगं तं केचिदन्ये पक्षवधं विदुः ।
उभयपक्षाघातः-सर्वाङ्गरोगस्तद्वच्च सर्वकायाश्रितेऽनिले

तत्रापरदोषसम्बन्धः —

दाहसन्तापमूर्च्छाः स्युर्वायौ पित्तसमन्विते ।
शैत्यशोथगुरुत्वानि तस्मिन्नेव कफान्विते ॥४२॥
तत्साध्यासाध्ये-शुद्धवातहतं पक्षं कृच्छ्रसाध्यतमं विदुः
साध्यमन्येन संयुक्तमसाध्यं क्षयहेतुकम् ॥ ४३ ॥
अर्दितरोगः-उच्चैर्व्याहरतोऽत्यर्थं खादतः कठिनानि वा ।
हसतो जृम्भतो वाऽपि भाराद्विषमशायिनः ॥४४॥
शिरो नासौष्ठचिबुकललाटेक्षणसन्धिगः ।
अर्दयत्यनिलो वक्त्रमर्दितं जनयत्यतः ।
वक्रीभवति वक्त्रार्धं ग्रीवा चाप्यपवर्तते ॥४५॥
शिरश्चलति वाक्सङ्गो नेत्रादीनां च वैकृतम् ।
ग्रीवाचिबुकदन्तानां तस्मिन्पार्श्वे च वेदना ॥ ४६॥
तमर्दितमिति प्राहुर्व्याधिं व्याधिविचक्षणाः ।

तदसाध्यता—

क्षीणस्यानिमिषाक्षस्य प्रसक्ताव्यक्तभाषिणः ।
न सिध्यत्यर्दितं गाढं त्रिवर्षं वेपनस्य च ।

स्वास्थ्यरूपं—

गते वेगे भवेत् स्वास्थ्यं सर्वेष्वाक्षेपकादिषु ॥४८॥

हनुग्रहः-जिह्वानिर्लेखनाच्छुष्कभक्षणादभिघाततः ।
कुपितो हनुमूलस्थः स्रंसयित्वाऽनिलो हनुम् ॥४९॥
करोति विवृतास्यत्वमथवा संवृतास्यताम् ।
हनुग्रहः स तेन स्यात्कृच्छ्राच्चर्वणभाषणम् ॥५०॥

मन्यास्तम्भः-दिवास्वप्नासमस्थानविवृतोर्ध्वनिरीक्षणैः ।
मन्यास्तम्भं प्रकुरुते स एव श्लेष्मणाऽऽवृतः ॥५१॥

जिह्वास्तम्भः—

वाग्वाहिनीसिरासंस्थो जिह्वां स्तम्भयतेऽनिलः
जिह्वास्तम्भः स तेनान्नपानवाक्येष्वनीशता ॥५२॥

सिराग्रहः-रक्तमाश्रित्य पवनः कुर्यान्मूर्धधराः सिराः ।
रूक्षाः सवेदनाः कृष्णाः सोऽसाध्यः स्यात्सिरोग्रहः ॥

गृध्रसी-स्फिक्पूर्वा कटिपृष्ठोरुजानुजङ्घापदं क्रमात् ।
गृध्रसी स्तम्भरुक्तोदैर्गृह्णाति स्पन्दते मुहुः ॥५४॥

वाताद्वातकफात्तन्द्रा गौरवारोचकान्विता ।

विश्वची-तलं प्रत्यङ्गुलीनां याः कण्डरा बाहुपृष्ठतः ॥

बाह्वोः कर्मक्षयकरी विश्वाची चेति सोच्यते ।

क्रोष्टुकशीर्षः-वातशोणितजः शोथो जानुमध्ये महारुजः ।

ज्ञेयः क्रोष्टुशीर्षस्तु स्थूलः क्रोष्टुकशीर्षवत् ।

खञ्जः पंगुश्च

वायुः कट्याश्रितः सक्थ्नः कण्डरामाक्षिपेद्यदा ॥

खञ्जस्तदा भवेज्जन्तुः, पंगुः सक्थ्नोर्द्वयोर्वधात् ॥

कलायखञ्जः-प्रक्रामन्वेपते यस्तु खञ्जन्निव च गच्छति

कलायखञ्जं तं विद्यान्मुक्तसन्धिप्रबन्धनम् ।

वातकण्टकः-रुक् पादे विषमन्यस्ते श्रमाद्वा जायते यदा

वातेन गुल्फमाश्रित्य तमाहुर्वातकण्टकम् ।

पाददाहः-पादयोः कुरुते दाहं पित्तासृक्सहितोऽनिलः

विशेषतश्चंक्रमतः पाददाहं तमादिशेत् ।

पादहर्षः-हृष्येते चरणौ यस्य भवेतां चापि सुप्तकौ ॥

पादहर्षः स विज्ञेयः कफवातप्रकोपतः ।

अवबाहुकः-अंसदेशस्थितो वायुः शोषयेदंसबन्धनम् ॥

सिराश्चाकुञ्च्य तत्रस्थो जनयेदवबाहुकम् ।

मूकमिन्मिनगद्गदाः—

आवृत्य वायुः सकफो धमनीः शब्दवाहिनीः ॥

नरान्करोत्यक्रियकान्मूकमिन्मिनगद्गदान् ।

तूनीरोगः-अधो या वेदना याति वर्चोमूत्राशयोत्थिता

भिन्दतीव गुदोपस्थं सा तूनी नाम नामतः ।

प्रतितूनी-गुदोपस्थोत्थिता या तु प्रतिलोमं प्रधाविता

वेगैः पक्वाशयं याति प्रतितूनीति सोच्यते ।

आध्मानरोगः-साटोपमत्युग्ररुजमाध्मातमुदरं भृशम् ॥

आध्मानमिति तं विद्याद्घोरं वातनिरोधजम् ।

प्रत्याध्मानरोगः-विमुक्तपार्श्वहृदयं तदेवामाशयोत्थितम् ।

प्रत्याध्मानं विजानीयात्कफव्याकुलितानिलम् ।

वाताष्ठीला-नाभेरधस्तात्संजातः संचारी यदि वाऽचलः

अष्ठीलावद्घनो ग्रन्थिरूर्ध्वमायत उन्नतः ।

वाताष्ठीलां विजानीयाद्बहिर्मार्गावरोधिनीम् ॥

प्रत्यष्ठीला-एतामेव रुजोपेतां वातविण्मूत्ररोधिनीम् ।

प्रत्यष्ठीलामिति वदेज्जठरे तिर्यगुत्थिताम् ॥७०॥

अनुलोमरूपं-मारुतेऽविगुणे वस्तौ मूत्रं सम्यक् प्रवर्तते

प्रतिलोमरूपं—

विकारा विविधाश्चात्र प्रतिलोमे भवन्ति हि ॥

कम्पवातः-सर्वाङ्गकम्पः शिरसो वायुर्वेपथुसंज्ञकः ।

खल्लीरोगः-खल्ली तु पादजङ्घोरुकरमूलावमोटनी ।

अनुक्तवातरोगविवेकः—

स्थाननामानुरूपैश्च लिङ्गैः शेषान्विनिर्दिशेत् ।
सर्वेष्वेतेषु संसर्गं पित्ताद्यैरुपलक्षयेत् ॥ ७३ ॥

साध्यासाध्यविवेकः—

हनुस्तम्भार्दिताक्षेपपक्षाघातापतानकाः ।
कालेन महताढ्यानां यत्नात्सिध्यन्ति वा नवा ॥

साध्यदशा-नरान् बलवतस्त्वेतान् साधयेन्निरुपद्रवान् ।

तदसाध्यदशा-विसर्पदाहरुक्सङ्गमूर्च्छारुच्यग्निमार्दवैः ॥
क्षीणमांसबलं वाता घ्नन्ति पक्षवधादयः ।

पुनश्च-शूनं सुप्तत्वचं भग्नं कम्पाध्माननिपीडितम् ।
रुजार्तिमन्तं च नरं वातव्याधिर्विनाशयेत् ॥७६॥

प्रकृतिस्थवातरूपं—

अव्याहतगतिर्यस्य स्थानस्थः प्रकृतिस्थितः ।

वायुः स्यात्सोऽधिकं जीवेद्वीतरोगः समाः शतम् ॥

इति श्रीमाधवकरविरचिते माधवनिदाने वातव्याधि-
निदानं समाप्तम् ॥

---

## अथ वातरक्त-निदानम्

कारणम्-लवणाम्लकटुक्षारस्निग्धोष्णाजीर्णभोजनैः ।
क्लिन्नशुष्काम्बुजानूपमांसपिण्याकमूलकैः ॥१॥
कुलत्थमाषनिष्पावशाकादिपललेक्षुभिः ।
दध्यारनालसौवीरशुक्ततक्रसुरासवैः ॥२॥
विरुद्धाध्यशनक्रोधदिवास्वप्नप्रजागरैः ।
प्रायशः सुकुमाराणां मिथ्याहारविहारिणाम् ।
स्थूलानां सुखिनां चापि कुप्यते वातशोणितम् ॥३॥
हस्त्यश्वोष्ट्रैर्गच्छतश्चाश्नतश्च
विदाह्यन्नं सविदाहोऽशनस्य ।
कृत्स्नं रक्तं विदहत्याशु तच्च स्रस्तं
दुष्टं पादयोश्चीयते तु ।
तत्संपृक्तं वायुना दूषितेन
तत्प्राबल्यादुच्यते वातरक्तम् ॥ ५ ॥

पूर्वरूपं—

स्वेदोऽत्यर्थं नवा कार्ष्ण्यं स्पर्शाज्ञत्वं क्षतेऽतिरुक् ।
सन्धिशैथिल्यमालस्यं सदनं पिडकोद्गमः ॥५॥
जानुजङ्घोरुकट्यंस-हस्तपादाङ्ग सन्धिषु ।
निस्तोदः स्फुरणं भेदो गुरुत्वं सुप्तिरेव च ॥६॥
कण्डू सन्धिषु रुग्भूत्वा भूत्वा नश्यति चासकृत ।
वैवर्ण्यं मण्डलोत्पत्तिर्वातास्रक्पूर्वलक्षणम् ॥७॥

वाताधिकं-वातेऽधिकेऽधिकं तत्र शूलस्फुरणभञ्जनम् ।
शोथस्य रौक्ष्यं कृष्णत्वं श्यावता वृद्धिहानयः ॥८॥
धमन्यङ्गुलिसन्धीनां संकोचोऽङ्गग्रहोऽतिरुक्
शीतद्वेषानुपशयौ स्तम्भवेपथुसुप्तयः ॥९॥

रक्ताधिकं-रक्तं शोथोऽतिरुक्तोदस्ताम्रश्चिमिचिमायते ।
स्निग्धरूक्षैः शमं नैति कण्डूक्लेदसमन्वितः ॥१०॥

पित्ताधिकं-पित्ते विदाहः संमोहः स्वेदो मूर्च्छा मदतृषा ।
स्पर्शासहत्वं रुग्रागः शोथः पाको भृशोष्मता ॥११॥

कफाधिकं-कफे स्तैमित्यगुरुता-सुप्तिस्निग्धत्वशीतताः ।
कण्डूर्मन्दा च रुग्, द्वन्द्वं सर्वलिङ्गं च संकरात् ॥१२॥

तत्प्रसारप्रकारः-पादयोर्मूलमास्थाय कदाचिद्धस्तयोरपि । ।

आखोर्विषमिव क्रुद्धं तद्देहमुपसर्पति ॥१३॥

असाध्ययाप्यंच-आजानुस्फुटितं यच्च प्रभिन्नं प्रस्तुतं च यत् ।
उपद्रवैश्च कञ्जुष्टं प्राणमांसक्षयादिभिः ॥१४॥
वातरक्तमसाध्यं स्याद्याप्यं संवत्सरोत्थितम् ।

वर्ज्यम्-अस्वप्नारोचकश्वास मांसकोथशिरोग्रहाः ॥१५॥
संमूर्च्छामदरुक्तृष्णाज्वरमोहप्रवेपकाः ।
हिक्कापाङ्गुल्यवीसर्पपाकतोदभ्रमक्लमाः ॥१६॥
अङ्लीवक्रतास्फोटदाहमर्मग्रहार्बुदाः ।
एतैरुपद्रवैर्वर्ज्यं मोहेनैकेन वापि यत् ॥१७॥

पुनश्च-अकृत्स्नोपद्रवं याप्यं साध्यं स्यान्निरुपद्रवम् ।
एकदोषानुगं साध्यं नवं, याप्यं द्विदोषजम् ।
त्रिदोषजमसाध्यं स्याद्यस्य च स्युरुपद्रवाः ॥१८॥

इति श्रीमाधवकरविरचिते माधवनिदाने वातरक्त-
निदानं समाप्तम् ॥

---

# अथ ऊरुस्तम्भ-निदानम्

कारणं-शीतोष्णद्रवसंशुष्कगुरुस्निग्धैर्निषेवितैः ।
जीर्णाजीर्णे तथाऽऽयाससंक्षोभस्वप्नजागरैः ॥१॥

सम्प्राप्तिः—सश्लेष्ममेदः पवनः साममत्यर्थसंचितम् ।
अभिभूयेतरं दोषमूरू चेत्प्रतिपद्यते ॥ २ ॥
सक्थ्यस्थिनी प्रपूर्यान्तः श्लेष्मणा स्तिमितेन च
तदा स्तभ्नाति तेनोरू स्तब्धौ शीतावचेतनौ ॥३॥
तत्स्वरूपं-परकीयाविव गुरू स्यातामतिभृशव्यथौ ।
ध्यानाङ्गमर्दस्तैमित्यतन्द्राच्छर्द्यरुचिज्वरैः ॥४॥
संयुक्तौ पादसदनकृच्छ्रोद्धरणसुप्तिभिः ।
तमूरुस्तम्भमित्याहुराढ्यवातमथापरे ॥ ५ ॥
पूर्वरूपं-प्राग्रूपं तस्य निद्राऽतिध्यानं स्तिमितता ज्वरः ।
रोमहर्षोऽरुचिश्छर्दिर्जङ्घोर्वोः सदनं तथा ॥६॥
मिथ्योपचारजं-वातशङ्किभिरज्ञानात्तस्य स्यात्स्नेहनात्पुनः
पादयोः सदनं सुप्तिः कृच्छ्रादुद्धरणं तथा ॥७॥
जङ्घोरुग्लानिरत्यर्थं शश्वच्चादाहवेदने ।
पादं च व्यथते न्यस्तं शीतस्पर्शं न वेत्ति च ॥८॥
संस्थाने पीडने गत्यां चालने चाप्यनीश्वरः ।
अन्यस्यैव हि संभग्नावूरू पादौ च मन्यते ॥९॥

साध्यासाध्यता—

यदा दाहार्तितोदार्तो वेपनः पुरुषो भवेत् ।

ऊरुस्तम्भस्तदा हन्यात्साधयेदन्यथा नवम् ॥१०॥

इति श्रीमाधवकर विरचिते माधवनिदाने-ऊरुस्तम्भ-निदानं-समाप्तम् ।

---

## अथ आमवात-निदानम् ।

कारणं—विरुद्धाहारचेष्टस्य मन्दाग्नेर्निश्चलस्य च ।
स्निग्धं भुक्तवतो ह्यन्नं व्यायामं कुर्वतस्तथा ॥१॥
सम्प्राप्ति—वायुना प्रेरितो ह्यामः श्लेष्मस्थानं प्रधावति ।
तेनात्यर्थं विदग्धोऽसौ धमनीः प्रतिपद्यते ॥२॥
वातपित्तकफैर्भूयो दूषितः सोऽन्नजो रसः ।
स्रोतांस्यभिष्यन्दयति नानावर्णोऽतिपिच्छिलः ॥३॥
जनयत्याशु दौर्बल्यं गौरवं हृदयस्य च ।
व्याधीनामाश्रयो ह्येष आमसंज्ञोऽतिदारुणः ॥४॥
युगपत्कुपितावन्तस्त्रिकसन्धिप्रवेशकौ ।
स्तब्धं वा कुरुतो गात्रमामवातः स उच्यते ॥५॥

सामान्यरूपं—

अङ्गमर्दोऽरुचिस्तृष्णा आलस्यं गौरवं ज्वरः ।
अपाकः शूनताङ्गानामामवातस्य लक्षणम् ॥६॥

विशेषरूपं-स कष्टः सर्वरोगाणां यदा प्रकुपितो भवेत् ।
हस्तपादशिरोगुल्फत्रिकजानूरुसन्धिषु ॥ ७ ॥
करोति सरुजं शोथं यत्र दोषः प्रपद्यते ।
स देशो रुज्यतेऽत्यर्थं व्याविद्ध इव वृश्चिकैः ॥
जनयेत्सोऽग्निदौर्बल्यं प्रसेकारुचिगौरवम् ।
उत्साहहानिं वैरस्यं दाहं च बहुमूत्रताम् ॥ ९ ॥
कुक्षौ कठिनतां शूलं तथा निद्राविपर्ययम् ।
तृट्छर्दिभ्रममूर्च्छाश्च हृद्ग्रहं विड्विबद्धताम् ।
जाड्यान्त्रकूजमानाहं कष्टांश्चान्यानुपद्रवान् ॥१०॥
दोषानुबंधरूपं-पित्तात्सदाहरागं च, सशूलं पवनानुगम्
स्तिमितं गुरुकण्डूं च कफदुष्टं तमादिशेत् ॥११॥

साध्यासाध्यता—

एकदोषानुगः साध्यो द्विदोषो याप्य उच्यते ।
सर्वदेहचरः शोथः स कृच्छ्रः सान्निपातिकः ॥१२॥
इति श्रीमाधवकरविरचिते माधवनिदाने आमवात-
निदानं समाप्तम् ।

—–—

# अथ शूल-परिणामशूल-अन्नद्रवशूल-निदानम् ।

संख्या-दोषैः पृथक् समस्तामद्वन्द्वैः शूलोऽष्टधा भवेत् ।
सर्वेष्वेतेषु शूलेषु प्रायेण पवनः प्रभुः ॥ १ ॥

वातशूलस्य कारणलक्षणे—

व्यायामयानादतिमैथुनाच्च
प्रजागराच्छीतजलातिपानात् ।
कलायमुद्गाढकिकोरदूषा-
दत्यर्थरूक्षाध्यशनाभिघातात् ॥ २ ॥

कषायतिक्तातिविरूढजान्नविरुद्धवल्लूरकशुष्कशाकात् ।
विट्शुक्रमूत्रानिलवेगरोधा-
च्छोकोपवासादतिहास्यभाष्यात् ॥ ३ ॥

वायुः प्रवृद्धो जनयेद्धि शूलं हृत्पार्श्वपृष्ठत्रिकवस्तिदेशे ।
जीर्णे प्रदोषे च घनागमे च
शीते च कोपं समुपैति गाढम् ॥ ४ ॥

मुहुर्मुहुश्चोपशमप्रकोपी विड्वातसंस्तम्भनतोदभेदैः
संस्वेदनाभ्यञ्जनमर्दनाद्यैः

स्निग्धोष्णभोज्यैश्च शमं प्रयाति ॥ ५ ॥

पित्तशूलस्य कारणलक्षणे-क्षारातितीक्ष्णोष्णविदाहितैल-
निष्पावपिण्याककुलत्थयूषैः ।
कट्वम्लसौवीरसुराविकारैः
क्रोधानलायासरविप्रतापैः ॥ ६ ॥
ग्राम्यातियोगादशनैर्विदग्धैः
पित्तं प्रकुप्याशु करोति शूलम् ।
तृण्मोहदाहार्तिकरं हि नाभ्यां
संस्वेदमूर्च्छाभ्रमचोषयुक्तम् ॥ ७ ॥
मध्यन्दिने कुप्यति चार्धरात्रे
विदाहकाले जलदात्यये च ।
शीते च शीतैः समुपैति शान्ति
सुस्वादुशीतैरपि भोजनैश्च ॥ ८ ॥

कफशूलस्य हेतुरूपे-आनूपवारिजकिलाटपयोविकारै-
र्मांसेक्षुपिष्टकृशरातिलशष्कुलीभिः ।
अन्यैर्बलासजनकैरपि हेतुभिश्च
श्लेष्मा प्रकोपमुपगम्य करोति शूलम् ॥ ६ ॥
हृल्लासकाससदनारुचिसंप्रसेकै-

रामाशये स्तिमितकोष्ठशिरोगुरुत्वैः ।
भुक्ते सदैव हि रुजं कुरुतेऽतिमात्रं
सूर्योदयेऽथ शिशिरे कुसुमागमे च ॥ १० ॥
त्रिदोषशूलम्-सर्वेषु दोषेषु च सर्वलिङ्गं
विद्याद्भिषक् सर्वभवं हि शूलम् ।
सुकष्टमेनं विषवज्रकल्पं विवर्जनीयं प्रवदन्ति तज्ज्ञाः ॥

आमशूलम्—

आटोपहृल्लासवमीगुरुत्वस्तैमित्यकानाहकफप्रसेकैः ।
कफस्य लिङ्गेन समानलिङ्गमामोद्भवं शलमुदाहरन्ति ।

द्विदोषचिन्हानि—

वस्तौ हृत्पार्श्वपृष्ठेषु स शलः कफवातिकः ।
कुक्षौ हृन्नाभिमध्येषु स शलः कफपैत्तिकः ॥ १३ ॥
दाहज्वरकरो घोरा विज्ञेयो वातपैत्तिकः ।

साध्यासाध्यरूपं—

एकदोषोत्थितः साध्यः कृच्छ्रसाध्यो द्विदोषजः
सर्वदोषोत्थितो घोरस्त्वसाध्यो भूयुपद्रवः ।

परिणामशूलं—

स्वैर्निदानैः प्रकुपितो वायुः संनिहितस्तदा ॥
कफपित्ते समावृत्य शूलकारी भवेद्बली ।

भुक्ते जीर्यति यच्छूलं तदेव परिणामजम् ॥ १६ ॥
तस्य लक्षणमप्येतत्समासेनाभिधीयते ।
वातिकम्-आध्मानाटोपविण्मूत्रविबन्धारतिवेपनैः ॥ १७॥
स्निग्धोष्णोपशमप्रायं वातिकं तद्वदेद्भिषक् ।
पैत्तिकम्-तृष्णादाहारतिस्वेदं कट्वम्ललवणोत्तरम् ॥१८ ॥
शूलं शीतशमप्रायं पैत्तिकं लक्षयेद् बुधः ।
कफात्मकं-छर्दिहृल्लाससंमोहं स्वल्परुग्दीर्घसन्तति ॥१६ ॥
कटुतिक्तोपशान्तं च तच्च ज्ञेयं कफात्मकम् ।
द्वन्द्वरूपं-संसृष्टलक्षणं बुद्ध्वा द्विदोषं परिकल्पयेत् ॥ २०
त्रिदोषरूपं-त्रिदोषजमसाध्यं तु क्षीणमांसबलानलम् ।
अन्नद्रवशूलं-जीर्णे जीर्यत्यजीर्णे वा यच्छूलमुपजायते ॥२१
पथ्यापथ्यप्रयोगेण भोजनाभोजनेन च ।
न शमं याति नियमात्सोऽन्नद्रव उदाहृतः ॥ २२ ॥
अन्नद्रवाख्यशूलेषु न तावत्स्वास्थ्यमश्नुते ।
वान्तमात्रे जरत्पित्तं शूलमाशु व्यपोहति ॥ २३ ॥
इति श्रीमाधवकरविरचिते-माधवनिदानेशूल-
परिणामशूल-अन्नद्रवशूल-निदानं समाप्तम् ।

# अथ-उदावर्त-आनाह-निदानम् ।

उदावर्त्त हेतवः-वातविण्मूत्रजृम्भास्रक्षवोद्गारवमीन्द्रियैः

क्षुत्तृष्णोच्छ्वासनिद्राणां धृत्योदावर्तसंभवः ॥ १ ॥

अपानोदावर्त्तरूपं—

वातमूत्रपुरीषाणां सङ्गो ध्मानं क्लमो रुजा ।

जठरे वातजाश्चान्ये रोगाः स्युर्वातनिग्रहात् ॥२॥

पुरीषोदावर्त्तस्य रूपम्—

आटोपशलौ परिकर्तिका च

सङ्गः पुरीषस्य तथोर्ध्ववातः ।

पुरीषमास्यादथवा निरेति पुरीषवेगेऽभिहते नरस्य

मूत्रोदावर्त्त-वस्तिमेहनयोः शूलं मूत्रकृच्छ्रं शिरोरुजा ।

विनामो वङ्क्षणानाहः स्याल्लिङ्गं मूत्रनिग्रहे ॥ ४ ॥

जृम्भोदावर्त्तस्य रूपम्-मन्यागलस्तम्भशिरोविकारा

जृम्भोपघातात्पवनात्मकाः स्युः ।

तथाऽक्षिनासावदनामयाश्च

भवन्ति तीव्राः सह कर्णरोगैः ॥ ५ ॥

अश्रूदावर्त्तस्य रूपम्-आनन्दजं वाऽप्यथ शोकजं

वा नेत्रोदकं प्राप्तममुञ्चतो हि ।

शिरोगुरुत्वं नयनामयाश्च
भवन्ति तीव्राः सह पीनसेन ॥ ६ ॥

छिक्कोदावर्त्तः-मन्यास्तम्भः शिरःशूलमर्दितार्धावभेदकौ
इन्द्रियाणां च दौर्बल्यं क्षवथोः स्याद्विधारणात् ॥७॥

उद्गारोदावर्त्तस्य रूपम्ः-कण्ठास्यपूर्णत्वमतीव तोदः
कूजश्च वायोरथवाऽप्रवृत्तिः ।
उद्गारवेगेऽभिहते भवन्ति
घोरा विकाराः पवनप्रसूताः ॥ ८ ॥

वमनोदावर्त्तरूपं—

कण्डूकोठारुचिव्यङ्गशोथपाण्ड्वामयज्वराः ।
कुष्ठवीसर्पहृल्लासाश्छर्दिनिग्रहजा गदाः ॥ ९ ॥

शुक्रोदावर्त्तस्य रूपं-मूत्राशये वै गुदमुष्कयोश्च
शोथो रुजा मूत्रविनिग्रहश्च ।
शुक्राश्मरी तत्स्रवणं भवेच्च
ते ते विकारा विहते च शुक्रे ॥ १० ॥

क्षुधोदावर्त्तस्य रूपम्-तन्द्राङ्गमर्दावरुचिः श्रमश्च
क्षुधाभिघातात्कृशता च दृष्टेः ।

तृष्णोदावर्त्तस्य रूपम्-कण्ठास्यशोषः श्रवणावरोध-

स्तृष्णाविघाताद्धृदये व्यथा च ॥ ११ ॥

श्वासोदावर्त्तस्य रूपम्-श्रान्तस्य निःश्वासविनिग्रहेण

हृद्रोगमोहावथवापि गुल्मः ।

निद्रोदावर्त्तस्य रूपम्-जृम्भाऽङ्गमर्दोऽक्षिशिरोतिजाड्यं

निद्राभिघातादथवाऽपि तन्द्रा ॥ १२ ॥

कोष्ठवातोदावर्त्त—

वायुः कोष्ठानुगो रूक्षैः कषायकटुतिक्तकैः ।

भोजनैः कुपित्तः सद्य उदावर्तं करोति हि ॥ १३ ॥

वातमूत्रपुरीषासृक्कफमेदोवहानि वै ।

स्रोतांस्युदावर्तयति पुरीषं चातिवर्तयेत् ॥ १४ ॥

ततो हृद्वस्तिशूलार्तो हृल्लासारतिपीडितः ।

वातमूत्रपुरीषाणि कृच्छ्रेण लभते नरः ॥ १५ ॥

श्वासकासप्रतिश्यायदाहमोहतृषाज्वरान् ।

वमिहिक्काशिरोरोगमनःश्रवणविभ्रमान् ।

बहूनन्यांश्च लभते विकारान्वातकोपजान् ॥ १६ ॥

आनाहरोग-निदानम्-आमं शकृद्वा निचितं क्रमेण

भूयो विबद्धं विगुणानिलेन ।

प्रवर्त्तमानं न यथास्वमेनं विकारमानाहमुदाहरन्ति ॥१७॥

आमाशयज आनाहः-तस्मिन् भवन्त्यामसमुद्भवे तु

तृष्णाप्रतिश्यायशिरोविदाहाः ।

आमाशये शूलमथो गुरुत्वं

हृत्स्तम्भ उद्गारविघातनं च ॥ १८ ॥

पक्वाशयज आनाहः-स्तम्भः कटीपृष्ठपुरीषमूत्रे

शूलोऽथ मूर्च्छा शकृतश्च छर्दिः ।

शोथश्च पक्वाशयजे भवन्ति

तथाऽलसोक्तानि च लक्षणानि ॥ १९ ॥

इति श्रीमाधवकरविरचिते-माधवनिदाने-उदावर्त-आनाह-निदानं समाप्तम् ॥

---

# अथ गुल्म-निदानम् ।

दुष्टा वातादयोऽत्यर्थं मिथ्याहारविहारतः ।

तत्संख्या-कुर्वन्ति पञ्चधा गुल्मं कोष्ठान्तर्ग्रन्थिरूपिणम् ।

तत्स्थानानि-तस्य पञ्चविधं स्थानं पार्श्वहृन्नाभिबस्तयः ।

तत्स्वरूपं-हृन्नाभ्योरन्तरे ग्रन्थिः संचारी यदि वाऽचलः ।

वृत्तश्चयापचयवान् स गुल्म इति कीर्तितः ॥ २ ॥

संख्या-स व्यस्तैर्जायते दोषैः समस्तैरपि चोच्छ्रितैः ।

पुरुषाणां तथा स्त्रीणां ज्ञेयो रक्तेन चापरः ॥ ३ ॥

पूर्वरूपम्—

उद्गारबाहुल्यपुरीषबन्धतृप्त्यक्षमत्वाऽन्त्रविकूजनानि ।
आटोपआध्मानमपक्तिशक्ति-
रासन्नगुल्मस्य वदन्ति चिह्नम् ॥ ४ ॥

सामान्यरूपं-अरुचिः कृच्छ्रविण्मूत्रवातताऽन्त्रविकूजनम् ।
आनाहश्चोर्ध्ववातत्वं सर्वगुल्मेषु लक्षयेत् ॥ ५ ॥

वातगुल्मस्य हेतुलक्षणे—

रूक्षान्नपानं विषमातिमात्रं विचेष्टनं वेगविनिग्रहश्च ।
शोकोऽभिघातोऽतिमलक्षयश्च
निरन्नता चानिलगुल्महेतुः ॥ ६ ॥

यः स्थानसंस्थानरुजाविकल्पं
विड्वातसङ्गं गलवक्त्रशोषम् ।
श्यावारुणत्वं शिशिरज्वरं च
हृत्कुक्षिपार्श्वांसशिरोरुजं च ॥ ७ ॥
करोति जीर्णे त्वधिकं प्रकोपं
भुक्ते मृदुत्वं समुपैति यश्च ।
वातात्स गुल्मो नच तत्र रूक्षं

कषायतिक्तं कटु चोपशेते ॥ ८ ॥

पित्तगुल्मस्य हेतुलक्षणे-कट्वम्लतीक्ष्णोष्णविदाहिरूक्ष-

क्रोधातिमद्यार्कहुताशसेवा ।

आमाभिघातो रुधिरं च दुष्टं

पैत्तस्य गुल्मस्य निमित्तमुक्तम् ॥ ९ ॥

ज्वरः पिपासा वदनाङ्गरागः

शूलं महज्जीर्यति भोजने च ।

स्वेदो विदाहो व्रणवच्च गुल्मः

स्पर्शासहः पैत्तिकगुल्मरूपम् ॥ १०॥

कफगुल्मस्य हेतुलक्षणे-शीतं गुरु स्निग्धमचेष्टनं च

संपूरणं प्रस्वपनं दिवा च ।

गुल्मस्य हेतुः कफसंभवस्य

सर्वस्तु दुष्टो निचयात्मकस्य ॥ ११ ॥

स्तैमित्यशीतज्वरगात्रसाद-

हृल्लासकासारुचिगौरवाणि ।

शैत्यं रुगल्पा कठिनोन्नतत्वं

गुल्मस्य रूपाणि कफात्मकस्य ॥ १२ ॥

औषधकल्पनार्थं द्वन्द्वदोषविवेकः-

निमित्तरूपाण्युपलभ्य गुल्मे
द्विदोषजे दोषबलाबलं च ।
व्यामिश्रलिङ्गानपरांश्च गुल्मां-
स्त्रीनादिशेदौषधकल्पनार्थम् ॥ १३ ॥

त्रिदोषगुल्मस्य लक्षणम्-महारुजं दाहपरीतमश्मव-
द्घनोन्नतं शीघ्रविदाहि दारुणम् ।
मनः शरीराग्नि बलापहारिणं
त्रिदोषजं गुल्ममसाध्यमादिशेत् ॥ १४ ॥

रक्तगुल्मस्य हेतुलक्षणे-नवप्रसूताऽहितभोजना या
या चामगर्भं विसृजेदृतौ वा ।
वायुर्हि तस्या परिगृह्य रक्तं
करोति गुल्मं सरुजं सदाहम् ।
पैत्तस्य लिङ्गेन समानलिङ्गं
विशेषणं चाप्यपरं निबोध ॥ १५ ॥
यः स्पन्दते पिण्डित एव नाऽङ्गै-
श्चिरात्सशूलः समगर्भलिङ्गः ।
स रौधिरः स्त्रीभव एव गुल्मो

मासे व्यतीते दशमे चिकित्स्यः ॥१६॥

असाध्यरूपं—संचितः क्रमशो गुल्मो महावास्तुपरिग्रहः ।

कृतमूलः सिरानद्धो यदा कूर्म इवोत्थितः ॥१७॥

दौर्बल्यारुचिहृल्लासकासच्छर्द्यरतिज्वरैः

तृष्णातन्द्राप्रतिश्यायैर्युज्यते स न सिध्यति ॥१८॥

पुनश्च—गृहीत्वा सज्वरं श्वासच्छर्द्यतीसारपीडितम् ।

हृन्नाभिहस्तपादेषु शोथः कर्षति गुल्मिनम् ॥१६॥

पुनश्च—श्वासः शूलं पिपासाऽन्नविद्वेषो ग्रन्थिमूढता ।

जायते दुर्बलत्वं च गुल्मिनो मरणाय वै ॥२०॥

इति श्रीमाधवकरविरचिते माधवनिदाने-

गुल्मनिदानं समाप्तम् ।

---

# अथ हृद्रोग-निदानम् ।

हेतुः—अत्युष्णगुर्वन्नकषायतिक्त-

श्रमाभिघाताऽध्यशनप्रसङ्गैः ।

संचिन्तनैर्वेगविधारणैश्च

हृदामयः पञ्चविधः प्रदिष्टः ॥ १ ॥

सम्प्राप्तिः—दूषयित्वा रसं दोषा विगुणा हृदयं गताः ।
हृदि बाधां प्रकुर्वन्ति हृद्रोगं तं प्रचक्षते ॥ २ ॥

वातहृद्रोगः—आयम्यते मारुतजे हृदयं तुद्यते तथा ।
निर्मथ्यते दीर्यते च स्फोटयते पाटयतेऽपि च ॥३॥

पित्तहृद्रोगः—तृष्णोष्मदाहचोषाः स्युः पैत्तिके हृदयक्लमः ।
धूमायनं च मूर्च्छा च स्वेदः शोषो मुखस्य च ॥४॥

कफहृद्रोगः—

गौरवं कफसंस्रावोऽरुचिः स्तम्भोऽग्निमार्दवम् ।
माधुर्यमपि चास्यस्य बलासावतते हृदि ॥ ५ ॥

त्रिदोषहृद्रोगः—विद्यात्त्रिदोषं त्वपि सर्वलिङ्गं,

क्रिमिहृद्रोगः—तीव्रार्तितोदं क्रिमिजं सकण्डूम् ।
उत्क्लेदः ष्ठीवनं तोदः शूलं हृल्लासकस्तमः ।
अरुचिः श्यावनेत्रत्वं शोथश्च क्रिमिजे भवेत् ॥६॥

उपद्रवाः—क्लमः सादो भ्रमः शोषो ज्ञेयास्तेषामुपद्रवाः ।
क्रिमिजे क्रिमिजातीनां श्लैष्मिकाणां च ये मताः ॥

इति श्रीमाधवकरविरचिते माधवनिदाने
हृद्रोग-निदानं समाप्तम् ।

# अथ मूत्रकृच्छ्रनिदानम् ।

हेतुसंख्ये—व्यायामतीक्ष्णौषधरूक्षमद्य-

प्रसङ्गनित्यद्रुतपृष्ठयानात् ।

आनूपमांसाध्यशनादजीर्णा-

त्स्युर्मूत्रकृच्छ्राणि नृणां तथाष्टौ ॥ १ ॥

सम्प्राप्तिः—पृथङ्मलाः स्वैः कुपिता निदानैः

सर्वेऽथवा कोपमुपेत्य वस्तौ ।

मूत्रस्य मार्गं परिपीडयन्ति

यदा तदा मूत्रयतीह कृच्छ्रात् ॥ २ ॥

वातज-मूत्रकृच्छ्रम्—तीव्रार्तिरुग्वङ्क्षणवस्तिमेढ्रे

स्वल्पं मुहुर्मूत्रयतीह वातात् ।

पित्तज-मूत्रकृच्छ्रम्—पीतं सरक्तं सरुजं सदाहं

कृच्छ्रं मुहुर्मूत्रयतीह पित्तात् ॥ ३ ॥

कफज-मूत्रकृच्छ्रम्—वस्तेः सलिङ्गस्य गुरुत्वशोथौ

मूत्रं सपिच्छं कफमूत्रकृच्छ्रे ।

सन्निपातज-मूत्रकृच्छ्रम्—सर्वाणि रूपाणि तु सन्निपाता-

द्भवन्ति तत्कृच्छ्रतमं हि कृच्छ्रम् ॥ ४ ॥

शल्याघातजं-मूत्रवाहिषु शल्येन क्षतेष्वभिहतेषु वा ।
मूत्रकृच्छ्रं तदाऽऽघाताज्जायते भृशदारुणम् ॥५॥
वातकृच्छ्रेण तुल्यानि तस्य लिङ्गानि निर्दिशेत् ।
पुरीषाघातजं—शकृतस्तु प्रतीघाताद्वायुर्विगुणतां गतः ॥६॥
आध्मानं वातशूलं च मूत्रसङ्गं करोति च ।
अश्मरीहेतुजं—अश्मरीहेतु तत्पूर्वं मूत्रकृच्छ्रमुदाहरेत् ॥७॥
शुक्रहेतुजं-शुक्रे दोषैरुपहते मूत्रमार्गे विधाविते ।
सशुक्रं मूत्रयेत्कृच्छ्राद्वस्तिमेहनशूलवान् ॥८॥
शर्कराऽश्मर्योरैक्यं—अश्मरी शर्करा चैव तुल्यसंभवलक्षणे
शर्करावैशेष्यं—विशेषणं शर्करायाः शृणु कीर्तयतो मम ॥
पच्यमानाऽश्मरी पित्ताच्छोष्यमाणा च वायुना ।
विमुक्तकफसन्धाना क्षरन्ती शर्करा मता ॥१०॥
हृत्पीडा वेपथुः शूलं कुक्षावग्निश्च दुर्बलः ।
तया भवति मूर्च्छा च मूत्रकृच्छ्रं च दारुणम् ॥११॥
मूत्रवेगनिरस्ताभिः प्रशमं याति वेदना ।
यावदस्याः पुनर्नैति गुडिका स्रोतसो मुखम् ॥१२॥
इति श्रीमाधवकरविरचिते माधवनिदाने
मूत्रकृच्छ्र-निदानं समाप्तम् ।

# अथमूत्राघात-निदानम्

मूत्राघातसंख्या-जायन्ते कुपितैर्दोषैर्मूत्राघातास्त्रयोदश ।
प्रायो मूत्रविघाताद्यैर्वातकुण्डलिकादयः ॥१॥
वातकुण्डलिका-रौक्ष्याद्वेगविघाताद्वा वायुर्वस्तौ सवेदनः
मूत्रमाविश्य चरति विगुणः कुण्डलीकृतः ॥२॥
मूत्रमल्पाल्पमथवा सरुजं सम्प्रवर्तते ।
वातकुण्डलिकां तां तु व्याधिं विद्यात्सुदारुणम् ।
अष्ठीला-आध्मापयन्वस्तिगुदं रुद्ध्वा वायुश्चलोन्नताम् ।
कुर्यात्तीव्रार्तिमष्ठीलां मूत्रविण्मार्गरोधिनीम् ॥४॥
वातवस्तिः-वेगं विधारयेद्यस्तु मूत्रस्याऽकुशलो नरः ।
निरुणद्धि मुखं तस्य वस्तेर्वस्तिगतोऽनिलः ॥५॥
मूत्रसङ्गो भवेत्तेन वस्तिकुक्षिनिपीडितः ।
वातवस्तिः स विज्ञेयो व्याधिः कृच्छ्रप्रसाधनः ॥
मूत्रातीतः-चिरं धारयतो मूत्रं त्वरया न प्रवर्तते ।
मेहमानस्य मन्दं वा मूत्रातीतः स उच्यते ॥७॥
मूत्रजठरं-मूत्रस्य वेगेऽभिहते तदुदावर्तहेतुकः ।
अपानः कुपितो वायुरुदरं पूरयेद्भृशम् ॥८॥

नाभेरधस्तादाध्मानं जनयेत्तीव्रवेदनम् ।
तन्मूत्रजठरं विद्यादधोवस्तिनिरोधनम् ॥९॥

मूत्रोत्संग

वस्तौ वाऽप्यथवा नाले मणौ वा यस्य देहिनः ।
मूत्रं प्रवृत्तं सज्जेत सरक्तं वा प्रवाहतः ॥१०॥
स्रवेच्छनैरल्पमल्पं सरुजं वाऽथ नीरुजम् ।
विगुणानिलजो व्याधिः स मूत्रोत्सङ्गसंज्ञितः ॥११॥

मूत्रक्षयः-रूक्षस्य क्लान्तदेहस्य वस्तिस्थौ पित्तमारुतौ ।
मूत्रक्षयं सरुग्दाहं जनयेतां तदाह्वयम् ॥१२॥

मूत्रग्रन्थिः—

अन्तर्वस्तिमुखे वृत्तः स्थिरोऽल्पः सहसा भवेत् ॥
अश्मरीतुल्यरुग्ग्रन्थिर्मूत्रग्रन्थिः स उच्यते ॥१३॥

मूत्रशुक्रं-मूत्रितस्य स्त्रियं यातो वायुना शुक्रमुद्धतम् ।
स्थानाच्च्युतं मूत्रयतः प्राक् पश्चाद्वा प्रवर्तते ॥१४॥
भस्मोदकप्रतीकाशं मूत्रशुक्रं तदुच्यते ।

उष्णवातः—

व्यायामाध्वातपैः पित्तं वस्तिं प्राप्यानिलान्वितम् ॥१५॥
वस्तिं मेढ्रं गुदं चैव प्रदहेत्स्रावयेदधः ।

मूत्रं हारिद्रमथवा सरक्तं रक्तमेव वा ॥१६॥

कृच्छ्रात्पुनः पुनर्जन्तोरुष्णवातं स्रवन्ति तम् ।

मूत्रसादः-पित्तं कफो द्वावपि वा संहन्येतेऽनिलेन चेत् ॥१७॥

कृच्छ्रान्मूत्रं तदा पीतं श्वेतं रक्तं घनं सृजेत् ।

सदाहं रोचनाशङ्खचूर्णवर्णं भवेत्तु तत् ॥१८॥

शुष्कं समस्तवर्णं वा मूत्रसादं वदन्ति तम् ।

विड्विघातः-रूक्षदुर्बलयोर्वातेनोदावृतं शकृद्यदा ॥१९॥

मूत्रस्रोतोऽनुपद्येत विट्संसृष्टं तदा नरः ।

विड्गन्धं मूत्रयेत्कृच्छ्राद्विड्विघातं विनिर्दिशेत् ॥२०॥

वस्तिकुण्डलं-द्रुताध्वलङ्घनायासैरभिघातात्प्रपीडनात् ।

स्वस्थानाद्वस्तिरुद्वृत्तः स्थूलस्तिष्ठति गर्भवत् ॥२१॥

शूलस्पन्दनदाहार्तो बिन्दुं बिन्दुं स्रवत्यपि ।

पीडितस्तु सृजेद्धारां संस्तम्भोद्वेष्टनार्तिमान् ॥२२॥

वस्तिकुण्डलमाहुस्तं घोरं शास्त्रविषोपमम् ।

वाताधिक्यरूपं-पवनप्रबलं प्रायो दुर्निवारमबुद्धिभिः ।

पित्तसम्बद्धरूपं—

तस्मिन्पित्तान्विते दाहः शूलं मूत्रविवर्णता ॥२३॥

कफसम्बद्धरूपं—

श्लेष्मणा गौरवं शोथः स्निग्धं मूत्रं घनं सितम् ।

असाध्यता—

श्लेष्मरुद्धबिलो बस्तिः पित्तोदीर्णो न सिध्यति ॥२४॥

साध्यता—

अविभ्रान्तविलः साध्यो न तु यः कुण्डलीकृतः ।

कुण्डलीभूत रूपं—

स्याद्वस्तौ कुण्डलीभूते तृण्मोहः श्वास एव च ॥२५॥

इति श्रीमाधवकरविरचिते माधवनिदाने मूत्राघात-
निदानं समाप्तम् ।

# अथ अश्मरी-निदानम्

संख्या-वातपित्तकफैस्तिस्रश्चतुर्थी शुक्रजाऽपरा ।
प्रायः श्लेष्माश्रयाः सर्वा अश्मर्यः स्युर्यमोपमाः ॥

अश्मरीसम्प्राप्तिः-विशोषयेद्वस्तिगतं सशुक्रं
मूत्रं सपित्तं पवनः कफं वा ।
यदा तदाऽश्मर्युपजायते तु
क्रमेण पित्तेष्विव रोचना गोः ॥२॥

पूर्वरूपं-नैकदोषाश्रयाः सर्वा अथासां पूर्व लक्षणम् ।

वस्त्याध्मानं तदासन्नदेशेषु परितोऽतिरुक् ॥३॥

सामान्यरूपं-मूत्रे बस्तसगन्धत्वं मूत्रकृच्छ्रं ज्वरोऽरुचिः ।

सामान्यलिङ्गं रुङ्नाभिसेवनीबस्तिमूर्धसु ॥४॥

तद्भावेरूपं-विशीर्णधारं मूत्रं स्यात्तया मार्गे निरोधिते ।

तद्भावेरूपं-तद्व्यपायात्सुखं मेहेदच्छं गोमेदकोपमम् ॥५॥

संक्षोभायासकार्यं—

तत्संक्षोभात्क्षते सास्रमायासाच्चातिरुग्भवेत् ।

वातिकाश्मरी—

तत्र वाताद्भृशं चार्तो दन्तान् खादति वेपते ॥६॥

गृह्णाति मेहनं नाभिं पीडयत्यनिशं क्वणन् ।

सानिलं मुञ्चति शकृन्मुहुर्मेहति बिन्दुशः ॥७॥

श्यावारुणाऽश्मरी चास्य स्याच्चिता कण्टकैरिव ।

पैत्तिकाश्मरी—

पित्तेन दह्यते बस्तिः पच्यमान इवोष्मवान् ॥८॥

भल्लातकास्थिसंस्थाना रक्तपीताऽसिताऽश्मरी ।

कफजाश्मरी—

बस्तिर्निस्तुद्यत इव श्लेष्मणा शीतलो गुरुः ॥९॥

अश्मरी महती श्लक्ष्णा मधुवर्णाऽथवा सिता ।

दोषजास्तु बालानामेव भवन्ति—

एता भवन्ति बालानां तेषामेव च भूयसा ॥१०॥

सुखसाध्याश्च ताः—

आश्रयोपचयाल्पत्वाद् ग्रहणाहरणे सुखाः ।

शुक्राश्मरी तु—( महतामेव )

शुक्राश्मरी तु महतां जायते शुक्रधारणात् ॥११॥
स्थानाच्च्युतममुक्तं हि मुष्कयोरन्तरेऽनिलः ।
शोषयत्युपसंगृह्य शुक्रं तच्छुक्रमश्मरी ॥१२॥
बस्तिरुङ्मूत्रकृच्छ्रत्वमुष्कश्वयथुकारिणी ।
तस्यामुत्पन्नमात्रायां शुक्रमेति विलीयते ॥१३॥
शर्करा-पीडिते त्ववकाशेऽस्मिन्नश्मर्येव च शर्करा ।
अणुशो वायुना भिन्ना सा तस्मिन्ननुलोमगे ॥१४॥
निरेति सह मूत्रेण प्रतिलोमे निरुध्यते ।
मूत्रस्रोतः प्रवृत्ता सा सक्ता कुर्यादुपद्रवान् ॥१५॥
दौर्बल्यं सदनं कार्श्यं कुक्षिशूलमथारुचिम् ।
पाण्डुत्वमुष्णवातं च तृष्णां हृत्पीडनं वमिम् ॥१६॥
असाध्यरूपं-प्रशूननाभिवृषणं बद्धमूत्रं रुजातुरम् ।
अश्मरी क्षपयत्याशु सिकता शर्करान्विता ॥१७॥
इति श्रीमाधवकरविरचिते माधवनिदाने अश्मरी निदानं समाप्तम ।

पूर्वार्द्धं समाप्तम् ।

# उत्तरार्द्धम् ।



## अथ प्रमेह-प्रमेहपिडका-निदानम् ।

प्रमेहहेतुः-आस्यासुखं स्वप्नसुखं दधीनि
ग्राम्यौदकानूपरसाः पयांसि ।
नवान्नपानं गुडवैकृतं च
प्रमेहहेतुः कफकृच्च सर्वम् ॥१॥

कफपित्तमेहसम्प्राप्तिः-मेदश्च मांसं च शरीरजं च
क्लेदं कफो बस्तिगतः प्रदूष्य ।
करोति मेहान् समुदीर्णमुष्णै-
स्तानेव पित्तं परिदूष्य चापि ॥२॥

वातमेहसम्प्राप्तिः-क्षीणेषु दोषेष्ववकृष्य धातून्
संदूष्य मेहान् कुरुतेऽनिलश्च ॥

पृथग्दोषसंख्या- ( साध्ययाप्यासाध्यविवेकश्च )

साध्याः कफोत्था दश, पित्तजाः षड

याप्या, न साध्यः पवनाच्चतुष्कः ॥३॥
समक्रियत्वाद्विषमक्रियत्वा-
न्महात्ययत्वाच्च यथाक्रमं ते ॥

दोषदूष्यविवेकः-कफः सपित्तः पवनश्च दोषा,
मेदोऽस्रशुक्राम्बुवसालसीकाः ।
मज्जा रसौजः पिशितं च दूष्याः
प्रमेहिणां विंशतिरेव मेहाः ॥४॥

पूर्वरूपम्-दन्तादीनां मलाढ्यत्वं प्राग्रूपं पाणिपादयोः ।
दाहश्चिक्कणता देहे तृड् स्वाद्वास्यं च जायते ॥५॥

सामान्यरूपम्-सामान्यं लक्षणं तेषां प्रभूताऽऽविलमूत्रता

भेदकल्पना-दोषदूष्याऽविशेषेऽपि तत्संयोगविशेषतः ॥६॥
मूत्रवर्णादिभेदेन भेदो मेहेषु कल्प्यते ।

उदकमेहः-अच्छं बहु सितं शीतं निर्गन्धमुदकोपमम् ॥७॥
मेहत्युदकमेहेन किंचिदाविलपिच्छिलम् ।

इक्षुमेहः-इक्षो रसमिवात्यर्थं मधुरं चेक्षुमेहतः ॥८॥

सान्द्रमेहः-सान्द्री भवेत् पर्युषितं सान्द्रमेहेन मेहति ।

सुरामेहः-सुरामेही सुरातुल्यमुपर्यच्छमधो घनम् ॥९॥

पिष्टमेहः-संहृष्टरोमा पिष्टेन पिष्ट वद्बहुलं सितम् ।

शुक्रमेहः-शुक्राभं शुक्रमिश्रं वा शुक्रमेही प्रमेहति ॥१०॥

सिकतामेहः—

मूत्राणून् सिकतामेही सिकतारूपिणो मलान् ।

शीतमेहः-शीतमेही सुबहुशो मधुरं भृशशीतलम् ॥११॥

शनैर्मेहः-शनैः शनैः शनैर्मेही मन्दं मन्दं प्रमेहति ।

लालामेहः-लालातन्तुयुतं मूत्रं लालामेहेन पिच्छिलम् ॥१२॥

क्षारमेहः-गन्धवर्णरसस्पर्शैः क्षारेण क्षारतोयवत् ।

नीलकालमेहौ-नीलमेहेन नीलाभं, कालमेही मसीनिभम् १३

हारिद्रमेहः-हारिद्रमेही कटुकं हरिद्रासंनिभं दहत् ।

माञ्जिष्ठमेहः-विस्रं माञ्जिष्ठमेहेन मञ्जिष्ठासलिलोपमम् । १४

रक्तमेहः-विस्रमुष्णं सलवणं रक्ताभं रक्तमेहतः ।

वसामेहः-वसामेही वसामिश्रं वसाभं मूत्रयेन्मुहुः । ॥१५॥

मज्जामेहः-मज्जाभं मज्जमिश्रं वा मज्जमेही मुहुर्मुहुः ।

क्षौद्रमेहः-कषायं मधुरं रूक्षं क्षौद्रमेहं वदेद् बुधः ॥१६॥

हस्तिमेहः-हस्ती मत्त इवाजस्रं मूत्रं वेगविवर्जितम् ।
सलसीकं विबद्धं च हस्तिमेही प्रमेहति ॥१७॥

कफमेहोपद्रवाः—

अविपाकोऽरुचिश्छर्दिर्निद्रा कासः सपीनसः ।

उपद्रवाः प्रजायन्ते मेहानां कफजन्मनाम् ॥१८॥

पित्तमेहोपद्रवाः-वस्तिमेहनयोस्तोदो मुष्कावदरणं ज्वरः

दाहतृष्णाऽम्लिका मूर्च्छा विड्भेदः पित्तजन्मनाम् १९

वातमेहोपद्रवाः—

वातजानामुदावर्तः कम्प-हृद्ग्रह-लोलताः ।

शूलमुन्निद्रता शोषः कासः श्वासश्च जायते ॥२०॥

असाध्यरूपं-यथोक्तोपद्रवाविष्टमतिप्रस्रुतमेव च ।

पिडकापीडितं गाढः प्रमेहो हन्ति मानवम् ॥२१॥

मधुमेहिवीर्येण जातस्यासाध्यता—

जातः प्रमेही मधुमेहिनो वा

न साध्य उक्तः स हि वीजदोषात् ।

सर्वेऽपि कुलजा रोगा असाध्या भवन्ति—

ये चापि केचित्कुलजा विकारा

भवन्ति तांस्तान्प्रवदन्त्यसाध्यान् ॥२२॥

मधुमेहताहेतुः-सर्व एव प्रमेहास्तु कालेनाऽप्रतिकारिणः

मधुमेहत्वमायान्ति तदाऽसाध्या भवन्ति हि ॥२३॥

मधुमेहरूपं-मधुमेहे मधुसमं जायते स किल द्विधा ।

क्रुद्धे धातुक्षयाद्वायौ दोषावृतपथेऽथवा ॥२४॥

आवृतो दोषलिङ्गानि सोऽनिमित्तं प्रदर्शयन् ।
क्षणात्क्षीणः क्षणात्पूर्णो भजते कृच्छ्रसाध्यताम् ॥२५
मधुरं यच्च मेहेषु प्रायो मध्विव मेहति ।
सर्वेऽपि मधुमेहाख्या माधुर्याच्च तनोरतः ॥२६॥

प्रमेहपिडकाः—तासां नामानि—( तत्संख्याच )

शराविका कच्छपिका जालिनी विनताऽलजी ।
मसूरिका सर्षपिका पुत्रिणी सविदारिका ॥२७॥
विद्रधिश्चेति पिडकाः प्रमेहोपेक्षया दश ।

**तासां स्थानं**—सन्धिमर्मसु जायन्ते मांसलेषु च धामसु ॥
**शराविका**—अन्तोन्नता तु तद्रूपा निम्नमध्या शराविका ।
**सर्षपिका**—गौरसर्षपसंस्थाना तत्प्रमाणा च सर्षपी ॥२८॥
**कच्छपिका**—सदाहा कूर्मसंस्थाना ज्ञेया कच्छपिका बुधैः ।
**जालिनी**—जालिनी तीव्रदाहा तु मांसजालसमावृता ॥३०
**विनता**—अवगाढरुजाक्लेदा पृष्ठे वाऽप्युदरेऽपि वा ।
महती पिडका नीला विनता नाम सा स्मृता ॥३१॥
**पुत्रिणी**—महत्यल्पाचिता ज्ञेया पिडका चापि पुत्रिणी ।
**मसूरिका**—मसूराकृतिसंस्थाना विज्ञेया तु मसूरिका ॥३२

अलजी—रक्ता सिता स्फोटचिता दारुणा त्वलजी भवेत् ।

विदारिका—विदारीकन्दवद्वृत्ता कठिना च विदारिका ॥

विद्रधिका—विद्रधेर्लक्षणैर्युक्ता ज्ञेया विद्रधिका तु सा ।

तासां विशेषः—

ये यन्मयाः स्मृता मेहास्तेषामेतास्तु तन्मयाः ॥३४॥

विना प्रमेहमप्येता जायन्ते दुष्टमेदसः ।

तावच्चैता न लक्ष्यन्ते यावद्वास्तुपरिग्रहः ॥३५॥

असाध्याः—गुदे हृदि शिरस्यंसे पृष्ठे मर्मसु चोत्थिताः ।

सोपद्रवा दुर्बलाग्नेः पिडकाः परिवर्जयेत् ॥३६॥

इति श्रीमाधवकरविरचिते माधवनिदाने प्रमेह-

प्रमेहपिडका-निदानं समाप्तम् ।

---

# अथ मेदो-रोग निदानम् ।

हेतुसम्प्राप्ती—अव्यायामदिवास्वप्नश्लेष्मलाहारसेविनः ।

मधुरोऽन्नरसः प्रायः स्नेहान्मेदः प्रवर्द्धयेत् ॥१॥

मेदसाऽऽवृतमार्गत्वात् पुष्यन्त्यन्ये न धातवः ।

मेदस्तु चीयते तस्मादशक्तः सर्वकर्मसु ॥२॥

क्षुद्रश्वासतृषामोहस्वप्नक्रथनसादनैः ।

युक्तः क्षुत्स्वेददौर्गन्ध्यैरल्पप्राणोऽल्पमैथुनः ॥३॥

तत्रोदरवृद्धिहेतुः—

मेदस्तु सर्वभूतानामुदरेष्वस्थिषु स्थितम् ।
अत एवोदरे वृद्धिः प्रायो मेदस्विनो भवेत् ॥४॥

क्षुधावृद्धिहेतुश्च—मेदसाऽऽवृतमार्गत्वाद्वायुः कोष्ठे विशेषतः ।
चरन् सन्धुक्षयत्यग्निमाहारं शोषयत्यपि ॥५॥
तस्मात् स शीघ्रं जरयत्याहारमभिकाङ्क्षति ।
विकारांश्चाप्नुते घोरान् कांश्चित् कालव्यतिक्रमात्
एतावुपद्रवकरौ विशेषादग्निमारुतौ ।
एतौ तु दहतः स्थूलं वनदावो वनं यथा ॥७॥

असाध्यस्थितिः—मेदस्यतीव संवृद्धे सहसैवानिलादयः ।
विकारान् दारुणान् कृत्वा नाशयन्त्याशु जीवितम् ॥

अतिस्थूलरूपं—मेदोमांसातिवृद्धत्वाच्चलस्फिगुदरस्तनः ।
अयथोपचयोत्साहो नरोऽतिस्थूल उच्यते ॥६॥

इति श्रीमाधवकरविरचिते माधवनिदाने मेदो-
निदानं समाप्तम् ।

# अथ उदर-निदानम् ।

हेतुः—रोगाः सर्वेऽपि मन्देऽग्नौ सुतरामुदराणि च ।

अजीर्णान्मलिनैश्चान्नैर्जायन्ते मलसंचयात् ॥ १ ॥

सम्प्राप्तिः—

रुद्ध्वा स्वेदाम्बुवाहीनि दोषाः स्रोतांसि संचिताः ।

प्राणाग्न्यपानान् संदूष्य जनयन्त्युदरं नृणाम् ॥२॥

सामान्यरूपम्—

आध्मानं गमनेऽशक्तिर्दौर्बल्यं दुर्बलाग्निता ।

शोथः सदनमङ्गानां सङ्गो वातपुरीषयोः ॥३॥

दाहस्तन्द्रा च सर्वेषु जठरेषु भवन्ति हि ।

संख्या—पृथग्दोषैः समस्तैश्च प्लीहबद्धक्षतोदकैः ॥४॥

संभवन्त्युदराण्यष्टौ तेषां लिङ्गं पृथक् शृणु ।

वातोदररूपं—तत्र वातोदरे शोथः पाणिपान्नाभिकुक्षिषु

कुक्षिपार्श्वोदरकटीपृष्ठरुक् पर्वभेदनम् ।

शुष्ककासोऽङ्गमर्दोऽधोगुरुता मलसंग्रहः ॥ ६ ॥

श्यावारुणत्वगादित्वमकस्माद् वृद्धिह्रासवत् ।

सतोदभेदमुदरं तनुकृष्णसिराततम् ॥७॥

आध्मातदृतिवच्छब्दमाहतं प्रकरोति च ।

वायुश्चात्र सरुक्शब्दो विचरेत्सर्वतो गतिः ॥८॥

पित्तोदररूपं—

पित्तोदरे ज्वरो मूर्च्छा दाहस्तृट् कटुकास्यता ।
भ्रमोऽतिसारः पीतत्वं त्वगादावुदरं हरित् ॥९॥
पीतताम्रसिरानद्धं सस्वेदं सोष्म दह्यते ।
धूमायते मृदुस्पर्शं क्षिप्रपाकं प्रदूयते ॥१०॥

कफोदररूपं—श्लेष्मोदरेऽङ्गसदनं स्वापश्वयथुगौरवम् ।
निद्रोत्क्लेशोऽरुचिः श्वासः कासः शुक्लत्वगादिता ॥११
उदरं स्तिमितं स्निग्धं शुक्लराजीततं महत् ।
चिराभिवृद्धं कठिनं शीतस्पर्शं गुरु स्थिरम् ॥१२॥

त्रिदोषजस्य दूष्योदरस्य वा हेतुलक्षणे—

स्त्रियोऽन्नपानं नखलोममूत्रविडार्तवैर्युक्तमसाधुवृत्ताः ।
यस्मै प्रयच्छन्त्यरयो गरांश्च दुष्टाम्बुदूषीविषसेवनाद्वा
तेनाशु रक्तं कुपिताश्च दोषाः
कुर्युः सुघोरं जठरं त्रिलिङ्गम् ।
तच्छीतवाते भृशदुर्दिने च विशेषतः कुप्यति दह्यते च
स चातुरो मुह्यति हि प्रसक्तं,
पाण्डुः कृशः शुष्यति तृष्णया च ।

दूष्योदरं कीर्तितमेतदेव,

प्लीहोदरस्य हेतुलक्षणे—प्लीहोदरं कीर्तयतो निबोध ॥१५॥

विदाह्यभिष्यन्दिरतस्य जन्तोः

प्रदुष्टमत्यर्थमसृक् कफश्च ।

प्लीहाभिवृद्धिं कुरुतः प्रवृद्धौ

प्लीहोत्थमेतज्जठरं वदन्ति ॥१६॥

तद्वामपार्श्वे परिवृद्धिमेति

विशेषतः सीदति चातुरोऽत्र ।

मन्दज्वराग्निः कफपित्तलिङ्गै-

रुपद्रुतः क्षीणबलोऽतिपाण्डुः ।

यकृद्दाल्युदरम्—

सव्यान्यपार्श्वे यकृति प्रवृद्धे ज्ञेयं यकृद्दाल्युदरं तदेव

तत्र वातादिविवेकः—उदावर्तरुजानाहैर्मोहतृड्दहनज्वरैः ।

गौरवारुचिकाठिन्यैर्विद्यात्तत्र मलान् क्रमात् ॥१८॥

बद्धगुदोदरस्य लक्षणम्—यस्यान्त्रमन्नैरुपलेपिभिर्वा

बालाश्मभिर्वा पिहितं यथावत् ।

संचीयते तस्य मलः सदोषः

शनैः शनैः संकरवच्च नाड्याम् ॥१९॥

निरुध्यते तस्य गुदे पुरीषं
निरेति कृच्छ्रादपि चाल्पमल्पम् ।
हृन्नाभिमध्ये परिवृद्धिमेति तस्योदरं बद्धगुदं वदन्ति २०

परिस्रावी-उदरः—क्षतोदरो वा—

शल्यं तथाऽन्नोपहितं तदन्त्रं
भुक्तं भिनत्त्यागतमन्यथा वा ।
तस्मात्स्रुतोऽन्त्रात्सलिलप्रकाशः
स्रावः स्रवेद्वै गुदतस्तु भूयः ॥२१॥
नाभेरधश्चोदरमेति वृद्धिं
निस्तुद्यते दाल्यति चातिमात्रम् ।
एतत्परिस्राव्युदरं प्रदिष्टं,
जलोदरः-दकोदरं कीर्तयतो निबोध ॥२२॥
यः स्नेहपीतोऽप्यनुवासितो वा
वान्तो विरिक्तोऽप्यथवा निरूढः ।
पिबेज्जलं शीतलमाशु तस्य
स्रोतांसि दुष्यन्ति हि तद्वहानि ॥२३॥
स्नेहोपलिप्तेष्वथवाऽपि तेषु दकोदरं पूर्ववदभ्युपैति ।
स्निग्धं महत्तत्परिवृत्तनाभि

समाततं पूर्णमिवाम्बुना च ।
यथा दृतिः क्षुभ्यति कम्पते च ।
शब्दायते चापि दकोदरं तत् ॥२४॥

कष्टसाध्यता-जन्मनैवोदरं सर्वं प्रायः कृच्छ्रतमं मतम् ।
बलिनस्तदजाताम्बु यत्नसाध्यं नवोत्थितम् ॥२५॥

असाध्यता-पक्षाद्बद्धगुदं तूर्ध्वं सर्वं जातोदकं तथा ।
प्रायो भवत्यभावाय छिद्रान्त्रं चोदरं नृणाम् ॥२६॥

असाध्योदरी-शूनाक्षं कुटिलोपस्थमुपक्लिन्नतनुत्वचम् ।
बलशोणितमांसाग्निपरिक्षीणं च वर्जयेत् ॥२७॥

पुनश्च-पार्श्वभङ्गान्नविद्वेषशोथातीसारपीडितम् ।
विरिक्तं चाप्युदरिणं पूर्यमाणं विवर्जयेत् ॥२८॥

इति श्रीमाधवकरविरचिते माधवनिदाने
उदर-निदानं समाप्तम् ॥

— —

## अथ शोथ-निदानम् ।

संप्राप्तिः-रक्तपित्तकफान् वायुर्दुष्टो दुष्टान् बहिः सिराः ।
नीत्वा रुद्धगतिस्तैर्हि कुर्यात्त्वङ्मांससंश्रयम् ॥१॥
उत्सेधं संहतं शोथं तमाहुर्निचयादतः ।

संख्या-सर्वं हेतुविशेषैस्तु रूपभेदान्नवात्मकम् ।
दोषैः पृथग्द्वयैः सर्वैरभिघाताद्विषादपि ।
पूर्वरूपं-तत्पूर्वरूपं दवथुः सिरायामोऽङ्गगौरवम् ॥३॥
निजशोथस्य कारणम्-शुद्ध्यामयाऽभुक्तकृशाबलानां
क्षाराम्लतीक्ष्णोष्णगुरूपसेवा ।
दध्याममृच्छाकविरोधिदुष्टगरोपसृष्टान्ननिषेवणं च ॥४॥
अर्शांस्यचेष्टा न च देहशुद्धिर्मर्मोपघातो विषमा प्रसूतिः ।
मिथ्योपचारः प्रतिकर्मणां च
निजस्य हेतुः श्वयथोः प्रदिष्टः ॥५॥
सामान्यरूपं-सगौरवं स्यादनवस्थितत्वं
सोत्सेधमूष्माऽथ सिरातनुत्वम् ।
सलोमहर्षश्च विवर्णता च
सामान्यलिङ्गं श्वयथोः प्रदिष्टम् ॥६॥
वातशोथः-चलस्तनुत्वक् परुषोऽरुणोऽसितः
सुषुप्तिहर्षार्तियुतोऽनिमित्ततः ।
प्रशाम्यति प्रोन्नमति प्रपीडितो
दिवाबली च श्वयथुः समीरणात् ॥७॥
पित्तशोथः-मृदुः सगन्धोऽसितपीतरागवान्

भ्रमज्वरस्वेदतृषामदान्वितः ।
य उष्यते स्पष्टरुगक्षिरागकृत्
स पित्तशोथो भृशदाहपाकवान् ॥८॥

कफशोथः-गुरुः स्थिरः पाण्डुररोचकान्वितः
प्रसेकनिद्रावमिवह्निमान्द्यकृत् ।
स कृच्छ्रजन्मप्रशमो निपीडितो
न चोन्नमेद्रात्रिबली कफात्मकः ॥९॥

द्वन्द्वजः-निदानाऽऽकृतिसंसर्गा-
च्छ्वयथुः स्याद् द्विदोषजः ।

त्रिदोषजः-सर्वाकृतिः सन्निपाताच्छोथोऽव्यामिश्रलक्षणः १०

आगन्तुजः-अभिघातेन शस्त्रादिच्छेदभेदक्षतादिभिः ।
हिमानिलोदध्यनिलैर्भल्लातकपिकच्छुजैः ॥११॥
रसैः शूकैश्च संस्पर्शाच्छ्वयथुः स्याद्विसर्पवान् ।
भृशोष्मा लोहिताभासः प्रायशः पित्तलक्षणः ॥१२॥
विषजः सविषप्राणिपरिसर्पणमूत्रणात् ।
दंष्ट्रादन्तनखाघातादविषप्राणिनामपि ॥१३॥
विण्मूत्रशुक्रोपहतमलवद्वस्त्रसंकरात् ।
विषवृक्षानिलस्पर्शाद्गरयोगावचूर्णनात् ॥१४॥

मृदुश्चलोऽवलम्बी च शीघ्रो दाहरुजाकरः ।

ऊर्ध्वशोथहेतुः—

दोषाः श्वयथुमूर्ध्वं हि कुर्वन्त्यामाशयस्थिताः ॥१५॥

मध्याधःशोथहेतुः—

पक्वाशयस्था मध्ये तु वर्चःस्थानगतास्त्वधः ।

सर्वदेहशोथः-कृत्स्नदेहमनुप्राप्ताः कुर्युः सर्वसरं तथा ॥१६॥

कष्टसाध्यः-यो मध्यदेशे श्वयथुः स कष्टः सर्वगश्च यः ।

असाध्यप्रायः-अर्धाङ्गे रिष्टभूतः स्याद्यश्चोर्ध्वं परिसर्पति १७

वर्ज्यः-श्वासः पिपासा छर्दिश्च दौर्बल्यं ज्वर एव च ।

यस्य चान्ने रुचिर्नास्ति श्वयथुं तं विवर्जयेत् ॥१८॥

असाध्यः-अनन्योपद्रवकृतः शोथः पादसमुत्थितः ।

पुरुषं हन्ति, नारीं च मुखजो, गुह्यजो द्वयम् ।

साध्यासाध्यौ—

नवोऽनुपद्रवः शोथः साध्योऽसाध्यः पुरेरितः ॥१९॥

विवर्जयेत्कुक्ष्युदराश्रितं च तथा गले मर्मणि संश्रितं च

स्थूलः खरश्चापि भवेद्विवर्ज्यो

यश्चापि बालस्थविराऽबलानां ॥२०॥

इति श्रीमाधवकरविरचिते-माधवनिदाने

शोथ-निदानं समाप्तम् ॥

# अथ अण्डवृद्धि-निदानम् ।

सम्प्राप्तिः-क्रुद्धोऽनूर्ध्वगतिर्वायुः शोथशूलकरश्चरन् ।
मुष्कौ वङ्क्षणतः प्राप्य फलकोषाभिवाहिनीः ॥१॥
प्रपीड्य धमनीर्वृद्धिं करोति फलकोषयोः ।
संख्या-दोषास्रमेदोमूत्रान्त्रैः स वृद्धिः सप्तधा गदः ॥२॥

मूत्रान्त्रवृद्ध्योर्विवेकः—

मूत्रान्त्रजावप्यनिलाद्धेतुभेदस्तु केवलम् ।
वातवृद्धिः वातपूर्णदृतिस्पर्शो रूक्षो वातादहेतुरुक् ॥३॥
पित्तवृद्धिः-पक्वोदुम्बरसंकाशः पित्ताद्दाहोष्मपाकवान् ।

कफवृद्धिः—

कफाच्छीतो गुरुः स्निग्धः कण्डूमान् कठिनोऽल्परुक् ४
रक्तवृद्धिः-कृष्णास्फोटावृतः पित्तवृद्धिलिङ्गश्च रक्तजः ।
मेदोवृद्धिः-कफवन्मेदसा वृद्धिर्मृदुस्तालफलोपमः ॥५॥
मूत्रवृद्धिः-मूत्रधारणशीलस्य मूत्रजः सतु गच्छतः ।
अम्भोभिः पूर्णदृतिवत् क्षोभं याति सरुङ्मृदुः ॥६॥
मूत्रकृच्छ्रमधः स्याच्च चालयन् फलकोषयोः ।
अन्त्रवृद्धिः-वातकोपिभिराहारैः शीततोयावगाहनैः ॥७॥

धारणे रणभाराध्वविषमाङ्गप्रवर्तनैः ॥
क्षोभणैः क्षोभितोऽन्यैश्च क्षुद्रान्त्रावयवं यदा ॥८॥
पवनो विगुणीकृत्य स्वनिवेशादधो नयेत् ।
कुर्याद्वङ्क्षणसन्धिस्थो ग्रन्थ्याभं श्वयथुं तदा ॥९॥
उपेक्ष्यमाणस्य च मुष्कवृद्धि-
माध्मानरुक्स्तम्भवतीं स वायुः ।
प्रपीडितोऽन्तः स्वनवान् प्रयाति
प्रध्मापयन्नेति पुनश्च मुक्तः ॥ १० ॥
अन्त्रवृद्धिरसाध्योऽयं वातवृद्धिसमाकृतिः ।

इति श्रीमाधवकरविरचिते माधवनिदाने वृद्धि-निदानं समाप्तम् ।

---

## अथ गलगण्ड गण्डमाला पची-ग्रन्थ्यर्बुद निदानम् ।

गलगण्डरूपं:-निबद्धः श्वयथुर्यस्य मुष्कवल्लम्बते गले ।
महान्वा यदि वा ह्रस्वो गलगण्डं तमादिशेत् ॥१॥
गलगण्डसम्प्राप्तिः-वातः कफश्चापि गले प्रदुष्टो

मन्ये च संश्रित्य तथैव मेदः ।
कुर्वन्ति गण्डं क्रमशः स्वलिङ्गैः
समन्वितं तं गलगण्डमाहुः ॥ २ ॥

वातज-गलगण्डः-तोदान्वितः कृष्णसिरावनद्धः
श्यावोऽरुणो वा पवनात्मकस्तु ।
पारुष्ययुक्तश्चिरवृद्ध्यपाको
यदृच्छया पाकमियात्कदाचित् ॥ ३ ॥
वैरस्यमास्यस्य च तस्य जन्तो-
र्भवेत्तथा तालुगलप्रशोषः ।

कफज-गलगण्डः-स्थिरः सवर्णो गुरुरुग्रकण्डूः
शीतो महांश्चापि कफात्मकस्तु ॥ ४ ॥
चिराभिवृद्धिं भजते चिराद्वा
प्रपच्यते मन्दरुजः कदाचित् ।
माधुर्यमास्यस्य च तस्य जन्तो-
र्भवेत्तथा तालुगलप्रलेपः ॥ ५ ॥

मेदोभव-गलगण्डः—
स्निग्धो गुरुः पाण्डुरनिष्टगन्धो
मेदोभवः कण्डुयुतोऽल्परुक् च ।

प्रलम्बतेऽलाबुवदल्पमूलो देहानुरूपक्षयवृद्धियुक्तः ॥ ६ ॥

स्निग्धास्यता तस्य भवेच्च जन्तो-

र्गलेऽनुशब्दं कुरुते च नित्यम् ।

असाध्य-गलगण्डः-कृच्छ्राच्छ्वसन्तं मृदुसर्वगात्रं

संवत्सरातीतमरोचकार्तम् ॥ ७ ॥

क्षीणं च वैद्यो गलगण्डयुक्तं

भिन्नस्वरं चापि विवर्जयेच्च ।

गण्डमाला-कर्कन्धुकोलामलकप्रमाणैः

कक्षांसमन्यागलवङ्क्षणेषु ॥ ८ ॥

मेदः कफाभ्यां चिरमन्दपाकैः

स्याद्गन्डमाला बहुभिश्च गण्डैः ।

अपची-ते ग्रन्थयः केचिदवाप्तपाकाः

स्रवन्ति नश्यन्ति भवन्ति चान्ये ॥ ९ ॥

कालानुबन्धं चिरमादधाति

सैवापचीति प्रवदन्ति तज्ज्ञाः ।

साध्याऽसाध्यत्वम्-साध्याः स्मृताः पीनसपार्श्वशूल-

कासज्वरच्छर्दियुतास्त्वसाध्याः ॥१०॥

ग्रन्थिः-वातादयो मांसमसृक् प्रदुष्टाः

संदूष्य मेदश्च तथा सिराश्च ।
वृत्तोन्नतं विग्रथितं च शोथं
कुर्वन्त्यतो ग्रन्थिरिति प्रदिष्टः ॥ ११ ॥

वातज-ग्रन्थिः-आयम्यते वृश्च्यति तुद्यते च
प्रत्यस्यते मथ्यति भिद्यते च ।
कृष्णो मृदुर्वस्तिरिवाततश्च
भिन्नः स्रवेच्चानिलजोऽस्रमच्छम् ॥ १२ ॥

पित्तज-ग्रन्थिः-दन्दह्यते धूप्यति वृश्च्यते च
पापच्यते प्रज्वलतीव चापि ।
रक्तःसपीतोऽप्यथवापि पित्ता-
द्भिन्नः स्रवेदुष्णमतीव चास्रम् ॥ १३ ॥

कफज-ग्रन्थिः-शीतोऽविवर्णोऽल्परुजोऽतिकण्डूः
पाषाणवत् संहननोपपन्नः ।
चिराभिवृद्धश्च कफप्रकोपा-
द्भिन्नः स्रवेच्छुक्लघनं च पूयम् ॥ १४ ॥

मेदोभव-ग्रन्थिः-शरीरवृद्धिक्षयवृद्धिहानिः
स्निग्धो महान् कण्डुयुतोऽरुजश्च ।
मेदःकृतो गच्छति चात्र भिन्ने

पिण्याकसर्पिःप्रतिमं तु मेदः ॥ १५ ॥

सिराज-ग्रन्थिः-व्यायामजातैरबलस्य तैस्तै-
राक्षिप्य वायुस्तु सिराप्रतानम् ।
संकुच्य संपिण्ड्य विशोष्य चापि
ग्रन्थिं करोत्युन्नतमाशुवृत्तम् ॥ १६ ॥

कष्टसाध्योऽसाध्यश्च ग्रन्थिः—

ग्रन्थिः सिराजः स तु कृच्छ्रसाध्यो
भवेद्यदि स्यात् सरुजश्चलश्च ।
स चारुजश्चाप्यचलो महांश्च
मर्मोत्थितश्चापि विवर्जनीयः ॥ १७ ॥

अर्बुद-रोगः-गात्रप्रदेशे क्वचिदेव दोषाः
संमूर्च्छिता मांसमसृक् प्रदूष्य ।
वृत्तं स्थिरं मन्दरुजं महान्त-
मनल्पमूलं चिरवृद्ध्यपाकम् ॥ १८ ॥
कुर्वन्ति मांसोच्छ्रयमत्यगाधं
तदर्बुदं शास्त्रविदो वदन्ति ।
वातेन पित्तेन कफेन चापि
रक्तेन मांसेन च मेदसा वा ॥ १९ ॥

तज्जायते तस्य च लक्षणानि
ग्रन्थेः समानानि सदा भवन्ति ।
रक्तजार्बुदः-दोषः प्रदुष्टो रुधिरं सिराश्च
संकुच्य संपिण्ड्य ततस्त्वपाकम् ॥ २० ॥
सास्रावमुन्नह्यति मांसपिण्डं
मांसांकुरैराचितमाशुवृद्धम् ।
करोत्यजस्रं रुधिरप्रवृत्तिमसाध्यमेतद्रुधिरात्मकं तु ॥२१॥
रक्तक्षयोपद्रवपीडितत्वात् पाण्डुर्भवेदर्बुदपीडितस्तु ।

मांसार्बुदः—

मुष्टिप्रहारादिभिरर्दितेऽङ्गे मांसं प्रदुष्टं जनयेद्धि शोथम् ॥२२
अवेदनं स्निग्धमनन्यवर्णमपाकमश्मोपममप्रचाल्यम् ।
प्रदुष्टमांसस्य नरस्य गाढमेतद्भवेन्मांसपरायणस्य ॥२३॥
मांसार्बुदं त्वेतदसाध्यमुक्तं साध्येष्वपीमानि तु वर्जयेच्च
संप्रस्रुतं मर्मणि यच्च जातं
स्रोतःसु वा यच्च भवेदचाल्यम् ॥ २४ ॥

अध्यर्बुदः—

यज्जायतेऽन्यत्खलु पूर्वजातेज्ञेयं तदध्यर्बुदमर्बुदज्ञैः ।
यद्द्वन्द्वजातं युगपत क्रमाद्वा

द्विरर्बुदं तच्च भवेदसाध्यम् ॥ २५ ॥

न पाकमायान्ति कफाधिकत्वान्

मेदोबहुत्वाच्च विशेषतस्तु ।

दोषस्थिरत्वाद् ग्रथनाच्च तेषां

सर्वार्बुदान्येव निसर्गतस्तु ॥ २६ ॥

इति श्रीमाधवकरविरचिते-माधवनिदाने गलगण्ड-गण्डमालाऽपची-ग्रन्थ्यर्बुद-निदानं समाप्तम् ॥

---

## अथ श्लीपद-निदानम् ।

सामान्यलक्षणम्-यः सज्वरो वङ्क्षणजो भृशार्तिः

शोथो नृणां पादगतः क्रमेण ।

तच्छ्लीपदं स्यात् करकर्णनेत्र-

शिश्नौष्ठनासास्वपि केचिदाहुः ॥ १ ॥

वातजम्-वातजं कृष्णरूक्षं च स्फुटितं तीव्रवेदनम् ।

अनिमित्तरुजं तस्य बहुशो ज्वर एव च ॥ २ ॥

पित्तजम्-पित्तजं पीतसंकाशं दाहज्वरयुतं मृदु ।

कफजम्-श्लैष्मिकं स्निग्धवर्णं च श्वेतं पाण्डुगुरुस्थिरम् ।

वाल्मीकमिव संजातं कण्टकैरुपचीयते ।
असाध्यरूपम्-अब्दात्मकं महत्तच्च वर्जनीयं विशेषतः ॥४॥

तत्र कफप्राधान्यं—

त्रीण्यप्येतानि जानीयाच्छ्लीपदानिकफोच्छ्रयात् ।
गुरुत्वं च महत्वं च यस्मान्नास्ति कफं विना ॥५॥

उत्पत्तिदेशाः-पुराणोदकभूयिष्ठाः स र्तुषु च शीतलाः ।
ये देशास्तेषु जायन्ते श्लीपदानि विशेषतः ॥६॥

पुनरसाध्यम्-यच्छ्लेष्मलाहारविहारजातं
पुंसः प्रकृत्याऽपि कफात्मकस्य ।
सास्रावमत्युन्नतसर्वलिङ्गं
सकण्डुरं श्लेष्मयुतं विवर्ज्यम् ॥७॥

इति श्रीमाधवकरविरचिते माधवनिदाने श्लीपद-
निदानं समाप्तम् ।

# अथ विद्रधि-निदानम् ।

त्वग्रक्तमांसमेदांसि संदूष्यास्थिसमाश्रिताः ।
दोषाः शोथं शनैर्घोरं जनयन्त्युच्छ्रिता भृशम् ॥१॥
स्वरूपं-महामूलं रुजावन्तं वृत्तं वाऽप्यथवाऽऽयतम् ।

स विद्रधिरिति ख्यातो विज्ञेयः षड्विधश्चसः ॥२॥
संख्या-पृथग् दोषैः समस्तैश्च क्षतेनाप्यसृजा तथा ।
षण्णामपि हि तेषां तु लक्षणं संप्रवक्ष्यते ॥३॥

वातजविद्रधिः—

कृष्णोऽरुणो वा विषमो भृशमत्यर्थवेदनः ।
चित्रोत्थानप्रपाकश्च विद्रधिर्वातसंभवः ॥४॥
पित्तजः-पक्वोदुम्बरसंकाशः श्यावो वा ज्वरदाहवान् ।
क्षिप्रोत्थानप्रपाकश्च विद्रधिः पित्तसंभवः ॥५॥
कफजः-शरावसदृशः पाण्डुः शीतः स्निग्धोऽल्पवेदनः ।
चिरोत्थानप्रपाकश्च विद्रधिः कफसंभवः ॥६॥

आस्रावषर्णं—

तनुपीतसिताश्चैषामास्रावाः क्रमशः स्मृताः ।

त्रिदोषजः—

नानावर्णरुजास्रावो घाटालो विषमो महान् ॥७॥
विषमं पच्यते चापि विद्रधिः सान्निपातिकः ।
क्षतजः-तैस्तैर्भावैरभिहते क्षते वाऽपथ्यकारिणः ॥८॥
क्षतोष्मा वायुविसृतः सरक्तं पित्तमीरयेत् ।
ज्वरस्तृष्णा च दाहश्च जायते तस्य देहिनः ॥९॥

आगन्तुर्विद्रधिर्ज्ञेय पित्त विद्रधिलक्षणः ।
रक्तजः-कृष्णस्फोटावृतः श्यावस्तीव्रदाहरुजाकरः ॥१०॥
पित्तविद्रधिलिङ्गस्तु रक्तविद्रधिरुच्यते ।

अन्तर्विद्रधिः—

पृथक् संभूय वा दोषाः कुपिता गुल्मरूपिणम् ॥११॥
वल्मीकवत् समुन्नद्धमन्तः कुर्वन्ति विद्रधिम् ।

अन्तःस्थानानि—

गुदे वस्तिमुखे नाभ्यां कुक्षौ वङ्क्षणयोस्तथा ॥१२॥
वृक्कयोः प्लीह्नि यकृति हृदि वा क्लोम्नि वाऽप्यथ ।
तेषामुक्तानि लिङ्गानि बाह्य विद्रधिलक्षणैः ॥१३॥
अधिष्ठानविशेषेण लिङ्गं शृणु विशेषतः ।

गुदवस्तिजातस्य रूपं—

गुदे वातनिरोधश्च, वस्तौ कृच्छ्राल्पमूत्रता ॥१४॥

नाभिजरूपं—

नाभ्यां हिक्का तथाऽऽटोपः कुक्षौ मारुतकोपनम् ।
वंक्षणजरूपं-कटीपृष्ठग्रहस्तीव्रो वङ्क्षणोत्थे तु विद्रधौ ॥१५॥

वृक्कप्लीहजं--

वृक्कयोः पार्श्वसंकोचः, प्लीह्न युच्छ्वासावरोधनम् ।

हृदयजरूपं-सर्वाङ्गप्रग्रहस्तीव्रो हृदि कासश्च जायते ।

यकृत्क्लोमजे—

श्वासो यकृति हिक्का च, क्लोम्नि पेपीयते पयः ॥१६॥

ऊर्ध्वाधःस्रावहेतुः—

नाभेरुपरिजाः पक्वा यान्त्यूर्ध्वमितरे त्वधः ।

साध्यासाध्यत्वं—

अधः स्रुतेषु जीवेत्तु स्रुतेषूर्ध्वं न जीवति ॥१७॥

अन्यच्च-हृन्नाभिवस्तिवर्ज्या ये तेषु भिन्नेषु बाह्यतः ।

जीवेत् कदाचित् पुरुषो नेतरेषु कदाचन ॥१८॥

अन्यच्च-साध्या विद्रधयः पञ्च, विवर्ज्यः सान्निपातिकः ।

आमपक्वज्ञानं-आमपक्वविदग्धत्वं तेषां शोथवदादिशेत् ॥१९॥

असाध्यरोगी—

आध्मातं बद्धनिष्यन्दं छर्दिहिक्कातृषान्वितम् ।

रुजाश्वाससमायुक्तं विद्रधिर्नाशयेन्नरम् ॥२०॥

इति श्रीमाधवकरविरचिते माधवनिदाने विद्रधि-

निदानं समाप्तम् ॥

— —

आगन्तुर्विद्रधिर्ह्येष पित्त विद्रधिलक्षणः ।

रक्तजः-कृष्णस्फोटावृतः श्यावस्तीव्रदाहरुजाकरः ॥१०॥

पित्तविद्रधिलिङ्गस्तु रक्तविद्रधिरुच्यते ।

अन्तर्विद्रधिः—

पृथक् संभूय वा दोषाः कुपिता गुल्मरूपिणम् ॥११॥

वल्मीकवत् समुन्नद्धमन्तः कुर्वन्ति विद्रधिम् ।

अन्तःस्थानानि—

गुदे वस्तिमुखे नाभ्यां कुक्षौ वङ्क्षणयोस्तथा ॥१२॥

वृक्कयोः प्लीह्नि यकृति हृदि वा क्लोम्नि वाऽप्यथ ।

तेषामुक्तानि लिङ्गानि बाह्य विद्रधिलक्षणैः ॥१३॥

अधिष्ठानविशेषेण लिङ्गं शृणु विशेषतः ।

गुदवस्तिजातस्य रूपं—

गुदे वातनिरोधश्च, वस्तौ कृच्छ्राल्पमूत्रता ॥१४॥

नाभिजरूपं—

नाभ्यां हिक्का तथाऽऽटोपः कुक्षौ मारुतकोपनम् ।

वंक्षणजरूपं-कटीपृष्ठग्रहस्तीव्रो वङ्क्षणोत्थे तु विद्रधौ ॥१५॥

वृक्कप्लीहजं--

वृक्कयोः पार्श्वसंकोचः, प्लीह्न युच्छ्वासावरोधनम् ।

हृदयजरूपं-सर्वाङ्गप्रग्रहस्तीव्रो हृदि कासश्च जायते ।

यकृत्क्लोमजे—

श्वासो यकृति हिक्का च, क्लोम्नि पेपीयते पयः ॥१६॥

ऊर्ध्वाधःस्रावहेतुः—

नाभेरुपरिजाः पक्का यान्त्यूर्ध्वमितरे त्वधः ।

साध्यासाध्यत्वं—

अधः स्रुतेषु जीवेत्तु स्रुतेषूर्ध्वं न जीवति ॥१७॥

अन्यच्च-हृन्नाभिवस्तिवर्ज्या ये तेषु भिन्नेषु वाह्यतः ।

जीवेत् कदाचित् पुरुषो नेतरेषु कदाचन ॥१८॥

अन्यच्च-साध्या विद्रधयः पञ्च, विवर्ज्यः सान्निपातिकः ।

आमपक्वज्ञानं-आमपक्वविदग्धत्वं तेषां शोथवदादिशेत् ॥१९॥

असाध्यरोगी—

आध्मातं बद्धनिष्यन्दं छर्दिहिक्कातृषान्वितम् ।

रुजाश्वाससमायुक्तं विद्रधिर्नाशयेन्नरम् ॥२०॥

इति श्रीमाधवकरविरचिते माधवनिदाने विद्रधि-

निदानं समाप्तम् ॥

— —

# अथ व्रणशोथ-निदानम् ।

व्रणपूर्वरूपं-एकदेशोत्थितः शोथो व्रणानां पूर्वलक्षणम् ।

तत्संख्या-षड्विधः स्यात् पृथक्सर्वरक्तागन्तुनिमित्तजः ॥१॥

शोथाः षडेते विज्ञेयाः प्रागुक्तै शोथलक्षणैः ।

एषां शोथरोगाद्विशेषः—

विशेषः कथ्यते चैषां पक्वादिनिश्चये ॥२॥

वातादिभेदात्पाकभेदः—

विषमं पच्यते वातात्, पित्तोत्थश्चाचिराच्चिरम् ।

कफजः पित्तवच्छोथो रक्तागन्तुसमुद्भवः ॥३॥

आमशोथरूपं—

मन्दोष्मताऽल्पशोथत्वं काठिन्यं त्वक्सवर्णता ।

मन्दवेदनता चैतच्छोथानामामलक्षणम् ॥४॥

पच्यमानशोथः-दह्यते दहनेनेव क्षारेणेव च पच्यते ।

पिपीलिकागणेनेव दश्यते छिद्यते तथा ॥५॥

भिद्यते चैव शस्त्रेण दण्डेनेव च ताड्यते ।

पीड्यते पाणिनेवान्तः सूचीभिरिव तुद्यते ॥६॥

सोषाचोषौ विवर्णः स्यादङ्गुल्येवाऽवघट्टयते ।

आसने शयने स्थाने शान्तिं वृश्चिकविद्धवत् ॥७॥

न गच्छेदाततः शोथो भवेदाध्मातवस्तिवत् ।
ज्वरस्तृष्णाऽरुचिश्चैव पच्यमानस्य लक्षणम् ॥८॥

पक्वशोथरूपं—

वेदनोपशमः शोथोऽलोहितोऽल्पो न चोन्नतः ।
प्रादुर्भावो वलीनां च तोदः कण्डूर्मुहुर्मुहुः ॥९॥
उपद्रवाणां प्रशमो निम्नता स्फुटनं त्वचाम् ।
वस्ताविवाऽम्बुसंचारः स्याच्छोथेऽङ्गुलिपीडिते ॥१०॥
पूयस्य पीडयत्येकमन्तमन्ते च पीडिते ।
भक्ताकांक्षा भवेच्चैतच्छोथानां पक्वलक्षणम् ॥११॥

व्रणपाके त्रिदोषविद्यमानता-नर्तेऽनिलाद्रुङ्‌,न विना च पित्तं
पाकः कफं चापि विना न पूयः ।
तस्माद्धि सर्वान् परिपाककाले
पचन्ति शोथांस्त्रयएव दोषाः ॥१२॥

शोथादनिर्गतपूयस्य कार्यम्-कक्षं समासाद्य यथैव वह्नि-
र्वाय्वीरितः संदहति प्रसह्य ।
तथैव पूयो ह्यविनिःसृतो हि
मांसं सिराः स्नायु च खादतीह ॥१३॥

आमपक्वाऽज्ञाने श्वपचत्वं

यश्छिनत्त्याममज्ञानाद्यो वा पक्वमुपेक्षते ।
श्वपचाविव मन्तव्यौ तावनिश्चितकारिणौ ॥१४॥

तज्ज्ञाने वैद्यत्वम्—

आमं विदह्यमानं च सम्यक् पक्वं च यो भिषक् ।
जानीयात् स भवेद्वैद्यः शेषास्तस्करवृत्तयः ॥१५॥

इति श्रीमाधवकरविरचिते माधवनिदाने व्रणशोथ-
निदानं समाप्तम् ।

# अथ शारीरव्रण-निदानम् ।

व्रणभेदः-द्विधाव्रणः स विज्ञेयः शारीरागन्तुभेदतः ।
दोषैराद्यस्तयोरन्यः शस्त्रादिक्षतसंभवः ॥१॥

वातजव्रणः-स्तब्धः कठिनसंस्पर्शो मन्दस्रावो महारुजः ।
तुद्यते स्फुरति श्यावो व्रणो मारुतसंभवः ॥२॥

पित्तजः-तृष्णामोहज्वरक्लेददाहदुष्ट्यवदारणैः ।
व्रणं पित्तकृतं विद्याद्गन्धैः स्रावैश्च पूतिकैः ॥३॥

कफजः-बहुपिच्छो गुरुः स्निग्धः स्तिमितो मन्दवेदनः ।
पाण्डुवर्णोऽल्पसंक्लेदश्चिरपाकी कफव्रणः ॥४॥

रक्तजः—रक्तो रक्तस्रुती रक्ताद्,

द्वन्द्वत्रिदोषजौ—द्वित्रिजः स्यात्तदन्वयैः ।

सुखसाध्यः—त्वङ्मांसजः सुखे देशे तरुणस्यानुपद्रवः ॥५

धीमतोऽभिनवः काले सुखे साध्यः सुखं व्रणः ।

कष्टसाध्यः—गुणैरन्यतमैर्हीनस्ततः कृच्छ्रो व्रणः स्मृतः ॥६

असाध्यः—सर्वैर्विहीनो विज्ञेयस्त्वसाध्यो भूर्युपद्रवः ।

अशुद्धव्रणरूपं—

पूतिः पूयातिदुष्टासृक्स्राव्युत्सङ्गी चिरस्थितिः ॥७॥

दुष्टो व्रणोऽतिगन्धादिः शुद्धलिङ्गविपर्ययः ।

शुद्धव्रणरूपं—

जिह्वातलाभोऽतिमृदुः श्लक्ष्णः स्निग्धोऽल्पवेदनः ॥८

सुव्यवस्थो निरास्रावः शुद्धो व्रण इति स्मृतः ।

रुह्यमाणरूपं—कपोतवर्णप्रतिमा यस्यान्ताः क्लेदवर्जितः ॥९

स्थिराश्च पिडकावन्तो रोहतीति तमादिशेत् ।

सम्यग्रूढरूपं—रूढवर्त्मानमग्रन्थिमशूनमरुजं व्रणम् ॥१०॥

त्वक्सवर्णं समतलं सम्यग्रूढं विनिर्दिशेत् ।

कष्टसाध्याः—कुष्ठिनां विषजुष्टानां शोषिणां मधुमेहिनाम् ॥

व्रणाः कृच्छ्रेण सिध्यन्ति येषां चापि व्रणे व्रणाः ।

आगन्तुजः साध्यः—दोषजोऽसाध्यः—

वसां मेदोऽथ मज्जानं मस्तुलुङ्गं च यः स्रवेत् ॥१२॥
आगन्तुजो व्रणः सिद्धयेन्न सिद्धयेद्दोषसंभवः ।

मुमूर्षुव्रणाः—मद्यागुर्वाज्यसुमनःपद्मचन्दनचम्पकैः ॥१३॥
सगन्धा दिव्यगन्धाश्च मुमूर्षूणां व्रणाः स्मृताः ।

त्याज्या व्रणाः—ये च मर्मस्वसंभूता भवन्त्यत्यर्थवेदनाः ॥
दह्यन्ते चान्तरत्यर्थं बहिःशीताश्च ये व्रणाः ।
दह्यन्ते बहिरत्यर्थं भवन्त्यन्तश्च शीतलाः ॥१५॥
प्राणमांसक्षयश्वासकासारोचकपीडिताः ।
प्रवृद्धपूयरुधिरा व्रणा येषां च मर्मसु ॥ १६ ॥
क्रियाभिः सम्यगारब्धा न सिध्यन्ति च ये व्रणाः ।
वर्जयेदपि तान् वैद्यः संरक्षन्नात्मनो यशः ॥ १७ ॥

इति श्रीमाधवकरविरचिते माधवनिदाने
शारीरव्रणनिदानं समाप्तम् ।

---

# अथ सद्योव्रण-निदानम् ।

कारणम्—नानाधारमुखैः शस्त्रैर्नानास्थाननिपातितैः ।
भवन्ति नानाकृतयो व्रणांस्तांस्तान्निबोध मे ॥ १ ॥

षड्भेदाः—छिन्नं भिन्नं तथा विद्धं क्षतं पिच्चितमेव च ।
घृष्टमाहुस्तथा षष्ठं तेषां वक्ष्यामि लक्षणम् ॥२॥

छिन्नरूपं—तिर्यक् छिन्न ऋजुर्वाऽपि
यो व्रणस्त्वायतो भवेत् ।
गात्रस्य पातनं तच्च छिन्नमित्यभिधीयते ॥ ३ ॥

भिन्नलक्षणं—शक्तिदन्तेषुखड्गाग्रविषाणैराशयो हतः ।
यत किंचित् प्रस्रवेत्तद्धि भिन्नलक्षणमुच्यते ॥ ४ ॥

कोष्ठलक्षणं—स्थानान्यामाग्निपक्कानां मूत्रस्य रुधिरस्य च ।
हृदुण्डुकः फुप्फुसश्च कोष्ठ इत्यभिधीयते ॥ ५ ॥

भिन्नकोष्ठरूपं—

तस्मिन् भिन्ने रक्तपूर्णे ज्वरो दाहश्च जायते ।
मूत्रमार्गगुदास्येभ्यो रक्तं घ्राणाच्च गच्छति ॥ ६ ॥
मूर्च्छा श्वासस्तृषाऽऽध्मानमभक्तच्छन्द एव च ।
विण्मूत्रवातसङ्गश्च स्वेदास्रावोऽक्षिरक्तता ॥ ७ ॥
लोहगन्धित्वमास्यस्य गात्रदौर्गन्ध्यमेव च ।
हृच्छूलं पार्श्वयोश्चापि विशेषं चात्र मे शृणु ॥ ८ ॥

आमाशयस्थे रक्ते—आमाशयस्थे रुधिरे रुधिरं छर्दयत्यपि
आध्मानमतिमात्रं च शूलं च भृशदारुणम् ॥ ९ ॥

पक्काशयस्थे रक्ते—पक्काशयगते चापि रुजा गौरवमेव च ।
अधःकाये विशेषेण शीतता च भवेदिह ॥ १० ॥

विद्धलक्षणं—सूक्ष्मास्यशल्याभिहतं यदङ्गं त्वाशयं विना ।
उत्तुण्डितं निर्गतं वा तद्विद्धमिति निर्दिशेत् ॥११॥

क्षतलक्षणं—नातिच्छिन्नं नातिभिन्नमुभयोर्लक्षणान्वितम् ।
विषमं व्रणमङ्गं यत्तत् क्षतं त्वभिधीयते ॥ १२ ॥

पिच्चितरूपं—प्रहारपीडनाभ्यां तु यदङ्गं पृथुतां गतम् ।
सास्थि तत् पिच्चितं विद्यान्मज्जरक्तपरिप्लुतम् ॥१३॥

घृष्टलक्षणं—घर्षणादभिघाताद्वा यदङ्गं विगतत्वचम् ।
उषास्रावान्वितं तच्च घृष्टमित्यभिधीयते ॥ १४ ॥

सशल्यव्रणलक्षणम्—श्यावं सशोथं पिडकाचितं च
मुहुर्मुहुः शोणितवाहिनं च ।
मृदूद्गतं बुद्बुदतुल्यमांसं
व्रणं सशल्यं सरुजं वदन्ति ॥ १५ ॥

कोष्ठप्राप्तशल्यं—

त्वचोऽतीत्य सिरादीनि भित्त्वा वा परिहृत्य वा ।
कोष्ठे प्रतिष्ठितं शल्यं कुर्यादुक्तानुपद्रवान् ॥१६॥

असाध्यं—तत्रान्तर्लोहितं पाण्डुशीतपादकराननम् ।

शीतोच्छ्वासं रक्तनेत्रमानद्धं च विवर्जयेत् ॥१७॥

मर्मक्षतस्य लक्षणम्—भ्रमः प्रलापः पतनं प्रमोहो
विचेष्टनं ग्लानिरथोष्णता च ।
स्रस्ताङ्गता मूर्च्छनमूर्ध्ववात-
स्तीव्रारुजा वातकृताश्च तास्ताः ॥ १८ ॥
मांसोदकाभं रुधिरं च गच्छेत्
सर्वेन्द्रियार्थोपरमस्तथैव ।
दशार्धसंख्येष्वथ विक्षतेषु
सामान्यतो मर्मसु लिङ्गमुक्तम् ॥ १९ ॥

सिरासु विद्धक्षतयोर्लक्षणम्—

सुरेन्द्रगोपप्रतिमं प्रभूतं रक्तं स्रवेत्तत् क्षतजश्च वायुः ।
करोति रोगान् विविधान् यथोक्तान्
सिरासु विद्धास्वथवा क्षतासु ॥२०॥

स्नायुविद्धस्य लक्षणम्—

कौब्ज्यं शरीरावयवावसादः
क्रियास्वशक्तिस्तुमुला रुजश्च ।
चिराद्व्रणो रोहति यस्य चापि
तं स्नायुविद्धं पुरुषं व्यवस्येत् ॥ २१ ॥

चलाचलसन्धिक्षतलक्षणम्—शोषाभिवृद्धिस्तुमुला रुजश्च
बलक्षयः सर्वत एव शोथः ।
क्षतेषु सन्धिष्वचलाचलेषु
स्यात् सर्वकर्मोपरमश्च लिङ्गम् ।। २२ ।।

अस्थिविद्धस्य लक्षणम्—

घोरा रुजो यस्य निशादिनेषु
सर्वास्ववस्थासु च नैति शान्तिम् ।
भिषग्विपश्चिद्विदितार्थसूत्र-
स्तमस्थिविद्धं पुरुषं व्यवस्येत् ।। २३ ।।

मर्मक्षतलक्षणम्—यथास्वमेतानि विभावयेच्च
लिङ्गानि मर्मस्वभिताडितेषु ।

मांसमर्मक्षतलक्षणम्—पाण्डुर्विवर्णः स्पृशितं न वेत्ति
यो मांसमर्मण्यभिपीडितः स्यात् ।। २४ ।।

व्रणानामुपद्रवाः—

विसर्पः पक्षघातश्च सिरास्तम्भोऽपतानकः ।
मोहोन्मादव्रणरुजो ज्वरस्तृष्णा हनुग्रहः ।। २५ ।।
कासश्छर्दिरतीसारो हिक्का श्वासः सवेपथुः ।

षोडशोपद्रवाः प्रोक्ता व्रणानां व्रणचिन्तकैः ॥२६॥

इति श्रीमाधवकरविरचिते माधवनिदाने
सद्योव्रण-निदानं समाप्तम् ।

---

## अथ भग्न-निदानम् ।

द्विविधं भग्नं-भग्नं समासाद्द्विविधं हुताश
काण्डे च सन्धौ च हि, तत्र सन्धौ ।
सन्धिभग्नप्रकाराः-उत्पिष्टविश्लिष्टविवर्तितं च
तिर्यग्गतं क्षिप्तमधश्च षट् च ॥ १ ॥
प्रसारणाकुञ्चनवर्तनोग्रा रुक् स्पर्शविद्वेषणमेतदुक्तम् ।
सामान्यतः सन्धिगतस्यलिङ्ग-
मुत्पिष्टसन्धेः श्वयथुः समन्तात् ॥ २ ॥
विशेषतो रात्रिभवा रुजा च
विश्लिष्टजे तौ च रुजा च नित्यम् ।
विवर्तिते पार्श्वरुजश्च तीव्रा-
स्तिर्यग्गते तीव्ररुजा भवन्ति ॥ ३ ॥
क्षिप्तेऽतिशूलं विषमत्वमस्थ्नोः

क्षिप्ते त्वधो रुग् विघटश्च सन्धेः ।

काण्डभग्नप्रकाराः-काण्डे त्वतः कर्कटकाश्वकर्ण-

विचूर्णितं पिच्चितमस्थिछल्लिका ॥ ४ ॥

काण्डेषु भग्नं ह्यतिपातितं च

मज्जागतं च स्फुटितं च वक्रम् ।

छिन्नं द्विधा द्वादशधाऽपि काण्डे

काण्डभग्नरूपं-स्रस्ताङ्गता शोथरुजातिवृद्धिः ॥ ५ ॥

संपीड्यमाने भवतीह शब्दः

स्पर्शासहं स्पन्दनतोदशूलाः ।

सर्वास्ववस्थासु न शर्मलाभो

भग्नस्य काण्डे खलु चिन्हमेतत् ॥ ६ ॥

भग्नस्य विविधत्वं-भग्नं तु काण्डे बहुधा प्रयाति

समासतो नामभिरेव तुल्यम् ॥ ७ ॥

साधारणरूपं—

अल्पाशिनोऽनात्मवतो जन्तोर्वातात्मकस्य च ।

उपद्रवैर्वा जुष्टस्य भग्नं कृच्छ्रेण सिध्यति ॥ ८ ॥

अन्यच्च-भिन्नं कपालं कट्यां तु सन्धिमुक्तं तथा च्युतम् ।

जघनं प्रतिपिष्टं च वर्जयेद्धि विचक्षणः ॥ ९ ॥

अन्यच्च-असंश्लिष्टकपालं च ललाटे चूर्णितं च यत्।
भग्नं स्तनान्तरे पृष्ठे शङ्खे मूर्ध्नि च वर्जयेत् ॥१०॥

अन्यच्च-सम्यक् सन्धितमप्यस्थि दुर्निक्षेपनिबन्धनात्।
संक्षोभाद्वाऽपि यद्गच्छेद्विक्रियां तच्च वर्जयेत् ॥ ११॥

भग्नानामन्यभेदाः—

तरुणास्थीनि नम्यन्ते भिद्यन्ते नलकानि च।
कपालानि विभज्यन्ते स्फुटन्ति रुचकानिच ॥१२॥

इति श्रीमाधवकरविरचिते माधवनिदाने भग्न-निदानं समाप्तम्।

—— ——

## अथ नाड़ीव्रण-निदानम्।

तद्धेतुप्रसारौ-यः शोथमाममतिपक्वमुपेक्षतेऽज्ञो
यो वा व्रणं प्रचुरपूयमसाधुवृत्तः।
अभ्यन्तरं प्रविशति प्रविदार्य तस्य
स्थानानि पूर्वविहितानि ततः स पूयः ॥ १ ॥
तस्यातिमात्रगमनाद्गतिरिष्यते तु
नाडीव यद्वहति तेन मता तु नाडी।

तत्संख्या-दोषैस्त्रिभिर्भवति सा पृथगेकशश्च ।
संमूर्च्छितैरपि च शल्यनिमित्ततोऽन्या ॥ २ ॥
वातिका नाडी-तत्रानिलात् परुषसूक्ष्ममुखी सशूला
फेनानुविद्धमधिकं स्रवति क्षपासु ।
पैत्तिका नाडी-पित्तात्तृषाज्वरकरी परिदाहयुक्ता
पीतं स्रवत्यधिकमुष्णमहःसु चापि ॥ ३ ॥
कफजा नाडी-ज्ञेया कफाद्बहुघनार्जुनपिच्छिलास्रा
स्तब्धा सकण्डुररुजा रजनीप्रवृद्धा ।
त्रिदोषजा-दाहज्वरश्वसनमूर्च्छनवक्त्रशोषा
यस्यां भवन्त्यभिहितानि च लक्षणानि ॥ ४ ॥
तामादिशेत्पवनपित्तकफप्रकोपाद्
घोरामसुक्षयकरीमिव कालरात्रिम् ।
शल्यजा-नष्टं कथंचिदनुमार्गमुदीरितेषु
स्थानेषु शल्यमचिरेण गतिं करोति ॥ ५ ॥
सा फेनिलं मथितमुष्णमसृग्विमिश्रं
स्रावं करोति सहसा सरुजा च नित्यम् ।
असाध्या-नाड़ी त्रिदोषप्रभवा न सिध्ये

कष्टसाध्याः-च्छेषाश्चतस्रः खलु यत्नसाध्याः ॥ ६ ॥

इति श्रीमाधवकरविरचिते माधवनिदाने नाडीव्रण-
निदानं समाप्तम् ।

— —

# अथ भगन्दर-निदानम् ।

सामान्यरूपं—

गुदस्य द्व्यङ्गुले क्षेत्रे पार्श्वतः पिडकाऽऽर्तिकृत्
भिन्ना, भगन्दरो ज्ञेयः स च पञ्चविधो मतः ॥१॥

शतपोनकः (वातजः)-कषायरूक्षैस्त्वतिकोपितोऽनिल-
स्त्वपानदेशे पिडकां करोति याम् ।
उपेक्षणात् पाकमुपैति दारुणं
रुजा च भिन्नाऽरुणफेनवाहिनी ॥ २ ॥

तत्रागमो मूत्रपुरीषरेतसां व्रणैरनेकैः शतपोनकं वदेत् ।

उष्ट्रशिरोधरः (पित्तजः)-प्रकोपणैः पित्तमतिप्रकोपितं
करोति रक्तां पिडकां गुदाश्रिताम् ॥ ३ ॥
तदाऽऽशुपाकाहिमपूतिवाहिनीं ।
भगन्दरं तूष्ट्रशिरोधरं वदेत् ॥ ४ ॥

परिस्रावी ( कफजः )

कण्डूयनो घनस्रावी कठिनो मन्दवेदनः ।
श्वेतावभासः कफजः परिस्रावी भगन्दरः ॥५॥

शम्बूकावर्त्तः ( त्रिदोषजः )–

बहुवर्णरुजास्रावा पिडका गोस्तनोपमा ।
शम्बूकावर्तवन्नाडी शम्बूकावर्तको मतः ॥ ६ ॥

उन्मार्गी (क्षतजः)-क्षताद्गतिः पायुगता विवर्धते
ह्युपेक्षणात् स्युः क्रिमयो विदार्य ते ।
प्रकुर्वते मार्गमनेकधामुखै-
र्वणैस्तदुन्मार्गिभगन्दरं वदेत् ॥ ७ ॥

कष्टसाध्याः-घोराः साधयितुं दुःखा सर्व एव भगन्दराः
असाध्यौ-तेष्वसाध्यस्त्रिदोषोत्थः क्षतजश्च विशेषतः ।
असाध्यभगन्दरी-वातमूत्रपुरीषाणि क्रिमयः शुक्रमेव च
भगन्दरात् स्रवन्तस्तु नाशयन्ति तमातुरम् ॥ ८ ॥

इति श्रीमाधवकरविरचिते माधवनिदाने
भगन्दर-निदानं समाप्तम् ।

———

# अथ-उपदंश-निदानम् ।

उपदंशकारणम्—

हस्ताभिघातान्नखदन्तपातादधावनाद्रत्यपसेवनाद्वा ।
योनिप्रदोषाच्च भवन्ति शिश्ने
पञ्चोपदंशा विविधाऽपचारैः ॥ १ ॥

वातजः-सतोदभेदैः स्फुरणैः सकृष्णैः
स्फोटैर्व्यवस्येत् पवनोपदंशम् ।

पित्तजः-रक्तजश्च-पीतैर्बहुक्लेदयुतैः सदाहैः
पित्तेन, रक्तात् पिशितावभासैः ॥ २ ॥
स्फोटैः सकृष्णै रुधिरं स्रवन्तं
रक्तात्मकं पित्तसमानलिङ्गम् ।

कफजः-सकण्डुरैः शोथयुतैर्महद्भिः
शुक्लैर्घनैः स्रावयुतैः कफेन ॥ ३ ॥

त्रिदोषजः—स चाऽसाध्यश्च—

नानाविधस्रावरुजोपपन्नमसाध्यमाहुस्त्रिमलोपदंशम्
विशीर्णमांसं क्रिमिभिः प्रजग्धं
मुष्कावशेषं परिवर्जयेच्च ॥ ४ ॥

उपेक्षाफलम्-संजातमात्रे न करोति मूढः
क्रियां नरो यो विषये प्रसक्तः ।
कालेन शोथक्रिमिदाहपाकै-
र्विशीर्णशिश्नो म्रियते स तेन ॥ ५ ॥

लिंगवर्त्तिः ( लिंगार्शो वा )—

अंकुरैरिव संघातैरुपर्युपरि संस्थितैः ।
क्रमेण जायते वर्तिस्ताम्रचूडशिखोपमा ॥ ६ ॥
कोषस्याभ्यन्तरे सन्धौ सर्वसन्धिगताऽपि वा ।
( सवेदना पिच्छिला च दुश्चिकित्स्या त्रिदोषजा । )
लिङ्गवर्तिरभिख्याता लिङ्गार्शं इति चापरे ॥ ७ ॥

इति श्रीमाधवकरविरचिते-माधवनिदाने-उपदंश-
निदानं समाप्तम् ।

---

## अथ शूकदोष-निदानम् ।

कारणम्

अक्रमाच्छेफसो वृद्धिं योऽभिवाञ्छति मूढधीः
संख्या-व्याधयस्तस्य जायन्ते दश चाष्टौ च शूकजाः ॥१॥
सर्षपिका-गौरसर्षपसस्थाना शूकदुभ्रमहेतुका ।

पिडिका श्लेष्मवाताभ्यां ज्ञेया सर्षपिका तु सा ॥२॥

अष्ठीलिका-कठिना विषमैर्भुग्नैर्वायुनाऽष्ठीलिका भवेत्

ग्रथितम्—

शूकैर्यत् पूरितं शश्वद् ग्रथितं नाम तत् कफात् ॥३॥

कुम्भिका—

कुम्भिका रक्तपित्तोत्था जाम्बवास्थिनिभाऽशुभा

अलजी-तुल्यजां त्वलजीं विद्याद्यथाप्रोक्तां विचक्षणः ॥४॥

मृदितं-मृदितं पीडितं यच्च संरब्धं वातकोपतः ।

संमूढपिडिका-पाणिभ्यां भृशसंमूढे संमूढपिडका भवेत् ॥५॥

अधिमन्थः-दीर्घा बह्वयश्चपिडका दीर्यन्ते मध्यतस्तु याः

सोऽधिमन्थः कफासृग्भ्यां वेदनारोमहर्षकृत ॥६॥

पुष्करिका-पिडका पिडकाव्याप्ता पित्तशोणितसंभवा ।

पद्मकर्णिकसंस्थाना ज्ञेया पुष्करिका तु सा ॥७॥

स्पर्शहानिः-स्पर्शहानिं तु जनयेच्छोणितं शूकदूषतम् ।

उत्तमा-मुद्गमाषोपमा रक्ता रक्तपित्तोद्भवा तु या ॥ ८ ॥

व्याधिरेषोत्तमा नाम शूकाजीर्णनिमित्तजाः ।

शतपोनकः-छिद्रैरणुमुखैर्लिङ्गं चितं यस्य समन्ततः ॥६॥

वातशोणितजो व्याधिः स ज्ञेयः शतपोनकः ।

त्वक्पाकः-वातपित्तकृतो ज्ञेयस्त्वक्पाको ज्वरदाहकृत् ॥१०

शोणितार्बुदः—

कृष्णैः स्फोटैः सरक्ताभिः पिडकाभिर्निपीडितम् ।
यस्य वास्तुरुजश्चोग्रा ज्ञेयं तच्छोणितार्बुदम् ॥११॥

मांसार्बुदः-मांसदोषेण जानीयादर्बुदं मांससंभवम् ।

मांसपाकः-शीर्यन्ते यस्य मांसानि यस्य सर्वाश्च वेदनाः
विद्यात्तं मांसपक्कं तु सर्वदोषकृतं भिषक् ।

विद्रधिः-विद्रधिं सन्निपातेन यथोक्तमिति निर्दिशेत् ॥१३॥

तिलकालकाः—

कृष्णानि चित्राण्यथवा शूकानि सविषाणि वा ।
पातितानि पचन्त्याशु मेढ्रं निरवशेषतः ॥ १४ ॥
कालानि भूत्वा मांसानि शीर्यन्ते यस्य देहिनः ।
सन्निपातसमुत्थांस्तु तान् विद्यात्तिलकालकान् ॥१५॥

असाध्यशूकाः-तत्र मांसार्बुदं यच्च मांसपाकश्च यः स्मृतः
विद्रधिश्च न सिद्ध्यन्ति ये च स्युस्तिलकालकाः॥१६॥

इति श्रीमाधवकरविरचिते-माधवनिदाने
शूकदोषः निदानं समाप्तम् ॥

# अथ कुष्ठ-निदानम् ।

कुष्ठानां हेतुसम्प्राप्ती—

विरोधीन्यन्नपानानि द्रवस्निग्धगुरूणि च ।
भजतामागतां छर्दिं वेगांश्चान्यान् प्रतिघ्नताम् ॥१॥
व्यायाममतिसन्तापमतिभुक्त्वा निषेविणाम् ।
घर्मश्रमभयार्तानां द्रुतं शीताम्बुसेविनाम् ॥ २ ॥
अजीर्णाध्यशिनां चैव पञ्चकर्मापचारिणाम ।
नवान्नदधिमत्स्यातिलवणाम्लनिषेविणाम् ॥ ३ ॥
माषमूलकपिष्टान्नतिलक्षीरगुडाशिनाम् ।
व्यवायं चाप्यजीर्णेऽन्ने निद्रां च भजतां दिवा ॥४॥
विप्रान् गुरून् धर्षयतां पापं कर्म च कुर्वताम् ।

तद्दोषदूष्यगणः—

वातादयस्त्रयो दुष्टास्त्वग्रक्तं मांसमम्बु च ॥ ५ ॥
दूषयन्ति स कुष्ठानां सप्तको द्रव्यसंग्रहः ।
संख्या-अतःकुष्ठानि जायन्ते सप्त चैकादशैव च ॥ ६ ॥
कुष्ठानि सप्तधा दोषैः पृथग्द्वन्द्वैः समागतैः ।
सर्वेष्वपि त्रिदोषेषु व्यपदेशोऽधिकत्वतः ॥७॥

पूर्वरूपं—अतिश्लक्ष्णखरस्पर्शस्वेदाऽस्वेदविवर्णताः ।
दाहः कण्डूस्त्वचि स्वापस्तोदः कोठोन्नतिर्भ्रमः ॥८॥
व्रणानामधिकं शूलं शीघ्रोत्पत्तिश्चिरस्थितिः ।
रूढानामपि रूक्षत्वं निमित्तेऽल्पेऽतिकोपनम् ॥९॥
रोमहर्षोऽसृजः कार्ष्ण्यं कुष्ठलक्षणमग्रजम् ।

सप्तमहाकुष्ठानि—

कापालकुष्ठं-कृष्णारुणकपालाभं यद्रूक्षं परुषं तनु ॥ १० ॥
(वातजं)
कापालं तोदबहुलं तत्कुष्ठं विषमं स्मृतम् ।

औदुम्बरकुष्ठं-(पित्तजं)

रुग्दाहरागकण्डूभिः परीतं रोमपिञ्जरम् ॥ ११ ॥
उदुम्बरफलाभासं कुष्ठमौदुम्बरं वदेत् ।

मण्डलकुष्ठं-(कफजं)

श्वेतं रक्तं स्थिरं स्त्यानं स्निग्धमुत्सन्नमण्डलम् ॥१२॥
कृच्छ्रमन्योन्यसंयुक्तं कुष्ठं मण्डलमुच्यते ।

ऋष्यजिह्व-(वातपैत्तिकं)

कर्कशं रक्तपर्यन्तमन्तःश्यावं सवेदनम् ॥ १३ ॥
यदृष्यजिह्वसंस्थानमृष्यजिह्वं तदुच्यते ।

पुण्डरीकं-(वातश्लैष्मिकम्)

सश्वेतं रक्तपर्यन्तं पुण्डरीकदलोपमम् ।।१४।।
सोत्सेधं च सरागं च पुण्डरीकं तदुच्यते ।

सिध्मम्-(पित्तकफजं)

श्वेतं ताम्रं तनु च यद्रजो घृष्टं विमुञ्चति ।।१५।।
प्रायश्चोरसि तत् सिध्ममलाबुकुसुमोपमम् ।

काकणं-(त्रिदोषजं)

यत्काकणन्तिकावर्णं सपाकं तीव्रवेदनम् ।।१६।।
त्रिदोषलिङ्गं तत्कुष्ठं काकणं नैव सिद्ध्यति ।

एकादशक्षुद्रकुष्ठानि—

एककुष्ठं-अस्वेदनं महावास्तु यन्मत्स्यशकलोपमम् ।।१७।।
चर्मकुष्टं-तदेककुष्ठं, चर्माख्यं बहलं हस्तिचर्मवत् ।
किटिमं-श्यावं किणखरस्पर्शं परुषं किटिमं स्मृतम् ।।१८।।
वैपादिकं-वैपादिकं पाणिपादस्फुटनं तीव्रवेदनम् ।
अलसकं-कण्डूमद्भिः सरागैश्च गण्डैरलसकं चितम् ।।१९।।
दद्रुकुष्ठं-सकण्डूरागपिडकं दद्रुमण्डलमुद्गतम् ।
चर्मदलं-रक्तं सशूलं कण्डूमत् सस्फोटं यद्दलत्यपि ।
तच्चर्मदलमाख्यातं संस्पर्शासहमुच्यते ।।२०।।

पामाकुष्ठं-सूक्ष्मा बह्वयः पिडका स्रावक्त्यः

पामेत्युक्ताः कण्डुमत्य सदाहा ।

कच्छूकुष्ठं-सैव स्फोटैस्तीव्रदाहैरुपेता

ज्ञेया पाण्योः कच्छुरुग्रा स्फिचोश्च ॥२१॥

स्फोटाः श्यावारुणाभासा विस्फोटाः स्युस्तनुत्वचः ।

शतारुः-रक्तं श्यावं सदाहार्ति शतारुः स्याद्बहुव्रणम् ॥२२॥

विचर्चिका-सकण्डूः पिडिका श्यावा बहुस्रावा विचर्चिका

कुष्ठेवातचिह्नं-खरं श्यावरुण रूक्षं वातकुष्ठं सवेदनम् ॥२३

पित्तचिह्नं-पित्तात्प्रकथितं दाहरागस्रावान्वितं मतम् ।

कफचिन्हं-कफात्क्लेदि घनं स्निग्धं सकण्डूशैत्यगौरवम् ॥२४

द्वन्द्वत्रिदोषचिह्नं—

द्विलिङ्गं द्वन्द्वजं कुष्ठं, त्रिलिङ्गं सान्निपातिकम् ।

त्वक्स्थकुष्ठं-त्वक्स्थे वैवर्ण्यमङ्गेषु कुष्ठे रौक्ष्यं च जायते ।

रक्तस्थं-त्वक्स्वापो रोमहर्षश्च स्वेदस्यातिप्रवर्तनम् ।

कण्डूर्विपूयकश्चैव कुष्ठे शोणितसंश्रिते ॥२६॥

मांसस्थं-बाहुल्यं वक्त्रशोषश्च कार्कश्यं पिडकोद्गमः ।

तोदः स्फोटः स्थिरत्वं च कुष्ठे मांससमाश्रिते ॥२७॥

मेदस्थं-कौण्यं गतिक्षयोऽङ्गानां संभेदः क्षतसर्पणम् ।

मेदःस्थानगते लिङ्गं प्रागुक्तानि तथैव च ॥२८॥

अस्थिमज्जस्थ-नासाभङ्गोऽक्षिरागश्च क्षतेषु क्रिमिसंभवः ।
स्वरोपघातश्च भवेदस्थिमज्जसमाश्रिते ॥२९॥

जन्मकुष्ठितं-दम्पत्योःकुष्ठबाहुल्याद्दुष्टशोणितशुक्रयोः ।
यदपत्यं तयोर्जातं ज्ञेयं तदपि कुष्ठितम् ॥३०॥

साध्यकुष्ठं—

साध्यं त्वग्रक्तमांसस्थं वातश्लेष्माधिकं च यत् ।

याप्यसाध्ये--

मेदसि द्वन्द्वजं याप्यं, वर्ज्यं मज्जास्थिसंश्रितम् ॥३१॥

असाध्यं-क्रिमितृड्दाहमन्दाग्निसंयुक्तं यत्त्रिदोषजम् ।
प्रभिन्नं प्रस्रुताङ्गं च रक्तनेत्रं हतस्वरम् ॥३२॥
पञ्चकर्मगुणातीतं कुष्ठं हन्तीह मानवम् ।

दोषविवेकः-वातेन कुष्ठं कापालं पित्तेनौदुम्बरं कफात् ॥३३
मण्डलाख्यं, विचर्ची च ऋष्याख्यं वातपित्तजम् ।
चर्मैककुष्ठं किटिभं, सिध्मालसविपादिकाः ॥३४॥
वातश्लेष्मोद्भवाः, श्लेष्मपित्ताद्दद्रुशतारुषी ।
पुण्डरीकं सविस्फोटं पामा चर्मदलं तथा ॥३५॥
सर्वैः स्यात्काकणं, पूर्वत्रिकं दद्रु सकाकणम् ।

पुण्डरीकर्ष्यजिह्वे च महाकुष्ठानि सप्त तु ॥३६॥

श्वित्रं किलासं च-कुष्ठैकसंभवंश्वित्रं किलासं वारुणं भवेत्

निर्दिष्टमपरिस्रावि त्रिधातूद्भवसंश्रयम् ॥३७॥

वातद्रूक्षारुणं पित्तात्ताम्रं कमलपत्रवत् ।

सदाहं रोमविध्वंसि कफाच्छ्वेतं घनं गुरु ॥३८॥

सकण्डुरं क्रमाद्रक्तमांसमेदःसु चादिशेत् ।

वर्णेनैवेद्दगुभयं कृच्छ्रं तच्चोत्तरोत्तरम् ॥३६॥

साध्यासाध्यश्वित्रं-अशुक्लरोमाऽबहुलमसंश्लिष्टमथो नवम् ।

अनग्निदग्धजं साध्यं श्वित्रं वर्ज्यमतोऽन्यथा ॥४०॥

असाध्य किलासं-गुह्यपाणितलोष्ठेषु जातमप्यचिरन्तनम् ।

वर्जनीयं विशेषेण किलासं सिद्धिमिच्छता ॥४१॥

संक्रामकरोगाः—

प्रसङ्गाद्गात्रसंस्पर्शान्निः श्वासात् सहभोजनात् ।

एकशय्यासनाच्चैव वस्त्रमाल्यानुलेपनात् ॥४२॥

कुष्ठं ज्वरश्च शोषश्च नेत्राभिष्यन्द एव च ।

औपसर्गिकरोगाश्च संक्रामन्ति नरान्नरम् ॥४३॥

इति श्रीमाधवकरविरचिते-माधव-निदाने कुष्ठ-निदानं समाप्तम् ।

---

# अथ शीतपित्तोदर्द कोठ निदानम् ।

हेतुसम्प्राप्ति-शीतमारुतसंस्पर्शात्प्रदुष्टौ कफमारुतौ ।
पित्तेन सह संभूय बहिरन्तर्विसर्पतः ॥१॥
पूर्वरूपं-पिपासारुचिहृल्लासदेहसादाङ्गगौरवम् ।
रक्तलोचनता तेषां पूर्वरूपस्य लक्षणम् ॥२॥
वरटीदष्टसंस्थानः शोथः संजायते बहिः ।
सकण्डूस्तोदबहुलश्छर्दिज्वरविदाहवान् ॥३॥
उदर्दमिति तं विद्याच्छीतपित्तमथापरे ।
वाताधिकं शीतपित्तमुदर्दस्तु कफाधिकः ॥४॥
सोत्सङ्गैश्च सरागश्च कण्डूमद्भिश्च मण्डलैः ।
शैशिरः कफजो व्याधिरुदर्द इति कीर्तितः ॥५॥
कोठमाह-असम्यग्वमनोदीर्णपित्तश्लेष्मान्ननिग्रहैः ।
मण्डलानि सकण्डूनि रागवन्ति बहूनि च ।
उत्कोठः सानुबन्धश्च कोठ इत्यभिधीयते ॥६॥

इति श्रीमाधवकरविरचिते-माधवनिदाने-शीतपित्तोदर्द-कोठ-निदानं समाप्तम् ।

———

# अथ अम्लपित्त-निदानम् ।

हेतु-विरुद्धदुष्टाम्लविदाहिपित्त-

प्रकोपिपानान्नभुजो विदग्धम् ।

पित्तं स्वहेतूपचितंपुरा यत्तदम्लपित्तं प्रवदन्ति सन्तः ॥१॥

सामान्य रूपं-अविपाकक्लमोत्क्लेशतिक्ताम्लोद्गारगौरवैः ।

हृत्कण्ठदाहारुचिभिश्चाम्लपित्तं वदेद्भिषक् ॥२॥

सानिलस्य लक्षणम्-तृड्दाहमूर्च्छाभ्रममोहकारि

प्रयात्यधो वा विविधप्रकारम् ।

हृल्लासकोठानलसादहर्षस्वेदाङ्गपीतत्वकरं कदाचित् ॥३

सानिल कफस्य लक्षणम्-वान्तं हरित्पीतकनीलकृष्ण-

मारक्तरक्ताभमतीव चाम्लम् ।

मांसोदकाभं त्वतिपिच्छिलाच्छं

श्लेष्मानुजातं विविधं रसेन ॥४॥

भुक्ते विदग्धे त्वथवाऽप्यभुक्ते

करोति तिक्ताम्लवमिं कदाचित् ।

उद्गारमेवंविधमेव कण्ठहृत्कुक्षिदाहं शिरसो रुजं च ॥५॥

सकफस्यलक्षणम्-करचरणदाहमौष्ण्यं

महतीमरुचिं ज्वरं च कफपित्तम् ।
जनयति कण्डूमण्डल-
पिडकाशतनिचितगात्ररोगचयम् ॥ ६ ॥

साध्यः—रोगोऽयमम्लपित्ताख्यो यत्नात् संसाध्यते नवः ।

याप्यः कष्टसाध्यश्च—

चिरोत्थितो भवेद्याप्यः, कृच्छ्रसाध्यः स कस्यचित् ॥

दोषसम्बन्धः—सानिलं सानिलकफं सकफं तच्च लक्षयेत् ।
दोषलिङ्गेन मतिमान् भिषङ्मोहकरं हि तत् ॥ ८ ॥

वातिकरूपं—

कम्पप्रलापमूर्च्छाचिमिचिमिगात्रावसादशूलानि ।
तमसो दर्शनविभ्रमविमोहहर्षाण्यनिलकोपात् ॥६॥

श्लैष्मिकरूपं—

कफनिष्ठीवनगौरवजडतारुचिशीतसादवमिलेपाः ।
दहनबलसादकण्डूनिद्राश्चिह्नं कफानुगते ॥ १० ॥

वातकफरूपम्—

उभयमिदमेव चिह्नं मारुतकफसंभवे भवत्यम्ले ।

कफपित्तरूपं—तिक्ताम्लकटुकोद्गारहृत्कुक्षिकण्ठदाहकृत् ॥
भ्रमो मूर्च्छारुचिश्छर्दिरालस्यं च शिरोरुजा ।

प्रसेको मुखमाधुर्यं श्लेष्मपित्तस्य लक्षणम् ॥ १२ ॥

इति श्रीमाधवकरविरचिते-माधवनिदाने
ऽम्लपित्त-निदानम् समाप्तम् ॥

---

## अथ विसर्प-निदानम् ।

हेतुसंख्ये—लवणाम्लकटूष्णादिसंसेवादोषकोपतः ।
विसर्पः सप्तधा ज्ञेयः सर्वतः परिसर्पणात् ॥ १ ॥
पृथक् त्रयस्त्रिभिश्चैको विसर्पा द्वन्द्वजास्त्रयः ।
वातिकः पैत्तिकश्चैव कफजः सान्निपातिकः ॥ २ ॥
चत्वार एते, वीसर्पा वक्ष्यन्ते द्वन्द्वजास्त्रयः ।
आग्नेयो वातपित्ताभ्यां, ग्रन्थ्याख्यः कफवातजः ॥३
यस्तु कर्दमको घोरः स पित्तकफसंभवः, ।

दूष्यं दोषाश्च—

रक्तं लसीका त्वङ्मांसं दूष्यं, दोषास्त्रयो मलाः ॥४॥
विसर्पाणां समुत्पत्तौ विज्ञेयाः सप्त धातवः ।
वातिकः—तत्र वातात् स वीसर्पो वातज्वरसमव्यथः ॥५
शोथस्फुरणनिस्तोदभेदायासार्तिहर्षवान् ।

पैत्तिकः—पित्ताद्द्रुगतिः पित्तज्वरलिङ्गोऽतिलोहितः ॥६॥
कफजः—कफात् कण्डूयुत स्निग्धः कफज्वरसमानरुक् ।
त्रिदोषजः—सन्निपातसमुत्थश्च सर्वलिङ्गसमन्वितः ॥७॥

द्वन्द्वजा विसर्पाः—

अग्निविसर्पः—वातपित्ताज्ज्वरच्छर्दिमूर्च्छातीसारतृड्भ्रमैः ।
ग्रन्थिभेदाग्निसदनतमकारोचकैर्युतः ॥ ८ ॥
करोति सर्वगङ्गं च दीप्ताङ्गारावकीर्णवत् ।
यं यं देशं विसर्पश्च विसर्पति भवेत् स सः ॥६॥
शान्ताङ्गारासितो नीलो रक्तो वाशु च चीयते ।
अग्निदग्ध इव स्फोटैः शीघ्रगत्वाद्द्रुत स चः ॥१०॥
मर्मानुसारी वीसर्पः स्याद्वातोऽतिबलस्ततः ।
व्यथतेऽङ्गं हरेत्संज्ञां निद्रां च श्वासमीरयेत् ॥११॥
हिक्कां च स गतोऽवस्थामीदृशीं लभते न ना ।
क्वचिच्छर्मारतिग्रस्तो भूमिशय्यासनादिषु ॥१२॥
चेष्टमानस्ततः क्लिष्टो मनोदेहप्रमोहवान् ।
दुष्प्रबोधोऽश्नुते निद्रां सोऽग्निविसर्प उच्यते ॥१३॥

ग्रन्थिविसर्पः—

कफेन रुद्धः पवनो भित्त्वा तं बहुधा कफम ।

रक्तं वा वृद्धरक्तस्य त्वकसिरास्नायुमांसगम् ॥१४॥
दूषयित्वा तु दीर्घाणुवृत्तस्थूलखरात्मनाम् ।
ग्रन्थीनां कुरुते मालां सरक्तां तीव्ररुग्ज्वराम् ॥१५॥
श्वासकासातिसारास्यशोषहिक्कावमिभ्रमैः ।
मोहवैवर्ण्यमूर्च्छाङ्गभङ्गाग्निसदनैर्युताम् ॥ १६ ॥
इत्ययं ग्रन्थिविसर्पः कफमारुतकोपजः ।

कर्दमविसर्पः—

कफपित्ताज्ज्वरः स्तम्भो निद्रा तन्द्रा शिरोरुजा ॥
अङ्गावसादविक्षेपौ प्रलेपारोचकभ्रमाः ।
मूर्च्छाग्निहानिर्भेदोऽस्थ्नां पिपासेन्द्रियगौरवम् ॥१८॥
आमोपवेशनं लेपः स्रोतसां स च सर्पति ।
प्रायेणामाशयं गृह्णन्नेकदेशं न चातिरुक् ॥ १९ ॥
पिडकैरवकीर्णोऽतिपीतलोहितपाण्डुरैः ।
स्निग्धोऽसितो मेचकाभो मलिनः शोथवान् गुरुः ॥
गम्भीरपाकः प्राज्योष्मा स्पृष्टः क्लिन्नोऽवदीर्यते ।
पङ्कवच्छीर्णमांसश्च स्पष्टस्नायुसिरागणः ॥२१॥
शवगन्धी च वीसर्पः कर्दमाख्यमुशन्ति तम् ।

क्षतविसर्प—

बाह्यहेतोः क्षतात् क्रुद्धः सरक्तं पित्तमीरयन् ॥२२॥
वीसर्पं मारुतः कुर्यात्कुलत्थसदृशैश्चितम् ।
स्फोटः शोथज्वररुजादाहाढ्यं श्यावशोणितम् ॥२३

उपद्रवाः—ज्वरातिसारौ वमथुस्त्वङ्मांसदरणं क्लमः ।
अरोचकाविपाकौ च विसर्पाणामुपद्रवाः ॥२४॥

साध्याः—सिध्यन्ति वातकफपित्तकृता विसर्पाः,
असाध्याः—सर्वात्मकः क्षतकृतश्च न सिद्धिमेति—
पित्तात्मकोऽञ्जनवपुश्च भवेदसाध्यः,
कष्टसाध्याः—कृच्छ्राश्च मर्मसु भवन्ति हि सर्व एव ॥२५॥

इति श्रीमाधवकरविरचिते-माधवनिदाने
विसर्प-निदानं समाप्तम् ।

# अथ विस्फोट निदानम् ।

हेतुः—कट्वम्लतीक्ष्णोष्णविदाहिरूक्ष-
क्षारैरजीर्णाध्यशनातपैश्च ।
तथर्तुदोषेण विपर्ययेण
कुप्यन्ति दोषाः पवनादयस्तु ॥ १ ॥

तत्सम्प्राप्तिः—त्वचमाश्रित्य ते रक्तमांसास्थीनि प्रदूष्य च
घोरान् कुर्वन्ति विस्फोटान् सर्वान् ज्वरपुरःसरान् ॥

तत्स्वरूपम्—

अग्निदग्धनिभाः स्फोटाः सज्वरा रक्तपित्तजाः ।
क्वचित् सर्वत्र वा देहे विस्फोटा इति ते स्मृताः ॥३॥

वातजः—शिरोरुक् शूलभूयिष्ठं ज्वरस्तृट् पर्वभेदनम् ।
सकृष्णवर्णता चेति वातविस्फोटलक्षणम् ॥४॥

पित्तजः—ज्वरदाहरुजास्रावपाकतृष्णाभिरन्वितम् ।
पीतलोहितवर्णं च पित्तविस्फोटलक्षणम् ॥ ५ ॥

कफजः—छर्द्यरोचकजाड्यानि कण्डूकाठिन्यपाण्डुताः ।
अवेदनश्चिरात्पाकी स विस्फोटः कफात्मकः ॥६॥

वातपित्तजः—वातपित्तकृतो यस्तु कुरुते तीव्रवेदनाम् ।

वातकफजः—कण्डूस्तैमित्यगुरुभिर्जानीयात्कफवातिकम् ॥

पित्तकफजः—कण्डूर्दाहो ज्वरश्छर्दिरेतैस्तु कफपैत्तिकः ।

त्रिदोषजः—

मध्ये निम्नोन्नतोऽन्ते च कठिनोऽल्पप्रपाकवान् ॥८॥
दाहरागतृषामोहच्छर्दिमूर्च्छारुजाज्वराः ।
प्रलापो वेपथुस्तन्द्रा सोऽसाध्यः स्यात्त्रिदोषजः ॥

रक्तजाः ( असाध्याः )—

रक्ता रक्तसमुत्थाना गुञ्जाविद्रुमसन्निभाः ।
वेदितव्यास्तु रक्तेन पैत्तिकेन च हेतुना ॥ १० ॥
न ते सिद्धिं समायान्ति सिद्धैर्योगशतैरपि ।

साध्यकृच्छ्रौ—

एकदोषोत्थितः साध्यः कृच्छ्रसाध्यो द्विदोषजः
असाध्यः—सर्वदोषोत्थितो घोरस्त्वसाध्यो भूर्युपद्रवः ॥

इति श्रीमाधवकरविरचिते-माधवनिदाने
विस्फोट-निदानं समाप्तम् ॥

# अथ मसूरिका-निदानम् ।

हेतुसंप्राप्ती—कट्वम्ललवणक्षारविरुद्धाध्यशनाऽशनैः ।
दुष्टनिष्पावशाकाद्यैः प्रदुष्टपवनोदकैः ॥ १ ॥
क्रूरग्रहेक्षणाच्चापि देशे दोषाः समुद्धताः ।
जनयन्ति शरीरेऽस्मिन् दुष्टरक्तेन सङ्गताः ॥ २ ॥
मसूराकृतिसंस्थानाः पिडकाः स्युर्मसूरिकाः ।
पूर्वरूपं—तासां पूर्वं ज्वरः कण्डूर्गात्रभङ्गोऽरतिर्भ्रमः ॥३॥
त्वचि शोथः सवैवर्ण्यो नेत्ररागश्च जायते ।

वातमसूरिका:—

स्फोटा: श्यावारुणा रूक्षास्तीव्रवेदनयाऽन्विता: ॥४

कठिनाश्चिरपाकाश्च भवन्त्यनिलसंभवा. ।

सन्ध्यस्थिपर्वणां भेद: कास: कम्पोऽरति: क्लम: ॥५

शोषस्ताल्वोष्ठजिह्वानां तृष्णा चारुचिसंयुता ।

पित्तमसूरिका:—

रक्ता: पीता: सिता: स्फोटा: सदाहास्तीव्रवेदना: ॥६

भवन्त्यचिरपाकाश्च पित्तकोपसमुद्भवा: ।

विड्भेदश्चाङ्गमर्दश्च दाहस्तृष्णाऽरुचिस्तथा ॥७॥

मुखपाकोऽक्षिरागश्च ज्वरस्तीव्र: सुदारुण: ।

रक्तमसूरी-रक्तजायां भवन्त्येते विकारा: पित्तलक्षणा: ॥८॥

कफमसूरिका:-

कफप्रसेक: स्तैमित्यं शिरोरुग् गात्रगौरवम् ।

हृल्लास: सारुचिर्निद्रा तन्द्रालस्यसमन्विता: ॥९॥

श्वेता: स्निग्धा भृशं स्थूला: कण्डूरा मन्दवेदना: ।

मसूरिका: कफोत्थाश्च चिरपाका: प्रकीर्तिता: ॥१०॥

त्रिदोषमसूरिका:-

नीलाश्चिपिटविस्तीर्णा मध्ये निम्ना महारुज: ।

चिरपाका पूतिस्रावा: प्रभूता: सर्वदोषजा: ॥११॥

कण्ठरोधाऽरुचिस्तम्भप्रलापाऽरतिसंयुताः ।
दुश्चिकित्स्याः समुद्दिष्टाः पिडकाश्चर्मसंज्ञियाः ॥१२

रोमान्तिकः—रोमकूपोन्नतिसमा रागिण्यः कफपित्तजाः ।
कासाऽरोचकसंयुक्ता रोमान्त्यो ज्वरपूर्विकाः ॥१३॥

त्वक्स्थमसूरिकाः—

तोयबुद्बुदसंकाशास्त्वग्गतास्तु मसूरिकाः ।
स्वल्पदोषाः प्रजायन्ते भिन्नास्तोयं स्रवन्ति च ॥१४

रक्तस्थाः—रक्तस्था लोहिताकाराः शीघ्रापाकास्तनुत्वचः ।
साध्या नात्यर्थदुष्टाश्च भिन्ना रक्तं स्रवन्ति च ॥१५

मांसस्थाः—

मांसस्थाः कठिनाः स्निग्धाश्चिरपाका घनत्वचः ।
गात्रशूलतृषाकण्डूज्वराऽरतिसमन्विताः ॥१६॥

मेदस्थाः—मेदोजा मण्डलाकारा मृदवः किंचिदुन्निताः ।
घोरज्वरपरीताश्च स्थूलाः स्निग्धाः सवेदनाः ॥१७॥

मज्जस्थाः—संमोहारतिसंतापाः कश्चिदाभ्यो विनिस्तरेत् ।
क्षुद्रा गात्रसमा रूक्षाश्चिपिटाः किंचिदुन्नताः ॥१८॥
मज्जोत्था भृशसंमोहवेदनाऽरतिसंयुताः ।
छिन्दन्ति मर्मधामानि प्राणानाशु हरन्ति हि ॥१९॥

भ्रमरेणेव विद्धानि कुर्यन्त्यस्थीनि सर्वतः ।

शुक्रस्थाः—

पक्काभाः पिडकाः स्निग्धाः सूक्ष्माश्चात्यर्थवेदनाः ॥

स्तैमित्याऽरतिसंमोहदाहोन्मादसमन्विताः ।

शुक्रजायां मसूर्यां तु लक्षणानि भवन्ति हि ॥२१॥

निर्दिष्टं केवलं चिह्नं दृश्यते न तु जीवितम् ।

तत्रदोषविवेकः—दोषमिश्रास्तु सप्तैता द्रष्टव्या दोषलक्षणैः ॥

साध्याः—त्वग्गता रक्तजाश्चैव पित्तजाः श्लेष्मजास्तथा ।

श्लेष्मपित्तकृताश्चैव सुखसाध्या मसूरिकाः ॥२३॥

कष्टसाध्याः—

वातजा वातपित्तोत्थाः श्लेष्मवातकृताश्च याः ।

कृच्छ्रसाध्या मतास्तस्माद्यत्नादेता उपाचरेत् ॥२४॥

असाध्याः—

असाध्याः सन्निपातोत्थास्तासां वक्ष्यामिलक्षणम् ।

प्रवालसदृशाः काश्चित् काश्चिज्जम्बूफलोपमाः ॥२५

लोहजालसमाः काश्चिदतसीफलसन्निभाः ।

आसां बहुविधा वर्णा जायन्ते दोषभेदतः ॥ २६ ॥

कासो हिक्का प्रमेहश्च ज्वरस्तीव्रः सुदारुणः ।

प्रलापश्चारतिर्मूर्च्छा तृष्णा दाहोऽतिघूर्णता ॥२७॥
मुखेन प्रस्रवेद्रक्तं तथा घ्राणेन चक्षुषा ।
कण्ठे घुर्घुरकं कृत्वा श्वसित्यत्यर्थवेदनम् ॥२८॥
मसूरिकाभिभूतस्य यस्यैतानि भिषग्वरैः ।
लक्षणानि च दृश्यन्ते न दद्या दत्र भेषजम् ॥२९॥
मसूरिकाभिभूतो यो भृशं घ्राणेन निःश्वसेत् ।
स भृशं त्यजति प्राणान् तृषार्तो वायुदूषितः ॥३०॥
मसूरिकान्ते शोथः स्यात् कूर्परे मणिबन्धके ।
तथांःसफलके चापि दुश्चिकित्स्यः सुदारुणः ॥३१॥

इति श्रीमाधवकरविरचिते-माधवनिदाने
मसूरिका-निदानं समाप्तम् ।

# अथ क्षुद्ररोग-निदानम् ।

अजगल्लिका—

स्निग्धाः सवर्णा ग्रथिता नीरुजा मुद्गसन्निभाः ।
कफवातोत्थिता ज्ञेयाः बालानामजगल्लिका: ॥१॥

यवप्रख्या—यवाकारा सुकठिना ग्रथिता मांससंश्रिता ।
पिडका कफवाताभ्यां यवप्रख्येति सोच्यते ॥२॥

अन्त्रालजी—घनामवक्त्रां पिडकामुन्नतां परिमण्डलाम् ।
अन्त्रालजीमल्पपूयां तां विद्यात्कफवातजाम् ॥३॥

विवृता—विवृतास्यां महादाहां पक्वोदुम्बरसंनिभाम् ।
विवृतामिति तां विद्यात्पित्तोत्थां परिमण्डलाम् ॥४॥

कच्छपिका—

ग्रथिताः पञ्च वा षड्वा दारुणाः कच्छपोपमाः ।
कफानिलाभ्यां पिडका ज्ञेयाः कच्छपिका बुधैः ॥५॥

वल्मीकः—ग्रीवांसकक्षाकरपाददेशे
सन्धौ गले वा त्रिभिरेव दोषैः ।
ग्रन्थिः स वल्मीकवदक्रियाणां
जातः क्रमेणैव गतः प्रवृद्धिम् ॥ ६ ॥

मुखैरनेकैः स्रुतितोदवद्भिर्विसर्पवत्सर्पति चोन्नताग्रैः ।
वल्मीकमाहुर्भिषजो विकारं
निष्प्रत्यनीकं चिरजं विशेषात् ॥ ७ ॥

इन्द्रविद्धा—पद्मकर्णिकवन्मध्ये पिडकाभिः समाचिताम् ।
इन्द्रविद्धां तु तां विद्याद्वातपित्तोत्थितां भिषक् ॥८॥

गर्दभिका—मण्डलं वृत्तमुत्सन्नं सरक्तं पिडकाचितम् ।
रुजाकरीं गर्दभिकां तां विद्याद्वातपित्तजाम् ॥९॥

पाषाणगर्दभः-वातश्लेष्मसमुद्भूतः श्वयथुर्हनुसन्धिजः ।
स्थिरो मन्दरुजः स्निग्धो ज्ञेयः पाषाणगर्दभः ॥१०॥

पनसिका-कर्णस्याभ्यन्तरे जातां पिडकामुग्रवेदनाम् ।
स्थिरां पनसिकां तां तु विद्याद्वातकफोत्थिताम् ॥११॥

जालगर्दभः-विसर्पवत्सर्पति यः शोथस्तनुरपाकवान्
दाहज्वरकरः पित्तात्स ज्ञेयो जालगर्दभः ॥१२॥

पिडकामुत्तमाङ्गस्थां वृत्तमुग्ररुजाज्वराम् ।
सर्वात्मिकां सर्वलिङ्गां जानीयादिरिवेल्लिकाम् ॥

कक्षा-बाहुपार्श्वांसकक्षेषु कृष्णस्फोटां सवेदनाम् ।
पित्तप्रकोपसंभूतां कक्षामित्यभिनिर्दिशेत् ॥ १४ ॥

गन्धमाला—

एकामेतादृशीं दृष्ट्वा पिडकां स्फोटसंनिभाम् ।
त्वग्गतां पित्तकोपेन गन्धमालां प्रचक्षते ॥ १५ ॥

अग्निरोहिणी—

कक्षभागेषु ये स्फोटा जायन्ते मांसदारणाः ।
अन्तर्दाहज्वरकरा दीप्तपावकसंनिभाः ॥ १६ ॥
सप्ताहाद्वा दशाहाद्वा पक्षाद्वा हन्ति मानवम् ।
तामग्निरोहिणीं विद्यादसाध्यां सर्वदोषजाम् ॥१७॥

चिप्पं-नखमांसमधिष्ठाय वायुः पित्तं च देहिनाम् ।
कुर्वाते दाहपाकौ च तं व्याधिं चिप्पमादिशेत् ॥
कुनखं-तदेवाल्पतरैर्दोषैः पुरुषं कुनखं वदेत् ॥ १९ ॥
अनुशयी-गम्भीरामल्पसंरम्भां सवर्णामुपरिस्थिताम् ।
पादस्यानुशयीं तां तु विद्यादन्तःप्रपाकिनीम् ॥२०॥
विदारिका-विदारीकन्दवद्वृत्तां कक्षावाङ्क्षणसन्धिषु ।
विदारिका भवेद्रक्ता सर्वजा सर्वलक्षणा ॥ २१ ॥

शर्करार्बुदः

प्राप्य मांससिरास्नायूः श्लेष्मामेदस्तथाऽनिलः ।
ग्रन्थिं करोत्यसौ भिन्नो मधुसर्पिर्वसानिभम् ॥२२॥
स्रवत्यास्रावमनिलस्तत्र वृद्धिं गतः पुनः ।
मांसं संशोष्य ग्रथितां शर्करां जनयेत्ततः ॥२३॥
दुर्गन्धि क्लिन्नमत्यर्थं नानावर्णं ततः सिराः ।
स्रवन्ति रक्तं सहसा तं विद्याच्छर्करार्बुदम् ॥२४॥
पाददारी-परिक्रमणशीलस्य वायुरत्यर्थरूक्षयोः ।
पादयोः कुरुते दारीं पाददारीं तमादिशेत् ॥२५॥
कदरं-शर्करोन्मथिते पादे क्षते वा कण्टकादिभिः
ग्रन्थिः कोलवदुत्सन्नो जायते कदरं हि तत् ॥२६॥

अलसं-क्लिन्नाङ्गुल्यन्तरौ पादौ कण्डूदाहरुजान्वितौ ।
दुष्टकर्दमसंस्पर्शादलसं तं विभावेयत् ॥ २७ ॥
इन्द्रलुप्तं-रोमकूपानुगं पित्तं वातेन सह मूर्च्छितम् ।
प्रच्यावयति रोमाणि ततः श्लेष्मा सशोणितः॥२८॥
रुणद्धि रोमकूपांस्तु ततोऽन्येषामसंभवः ।
तदिन्द्रलुप्तं खालित्यं रुह्येति च विभाव्यते ॥२९॥
दारुणकं-दारुणा कण्डुरा रूक्षा केशभूमिः प्रपाट्यते ।
कफमारुतकोपेन विद्याद्दारुणकं तु तम् ॥ ३० ॥
अरुंषिका-अरूंषि बहुवक्त्राणि बहुक्लेदीनि मूर्ध्नि तु ।
कफासृक्क्रिमिकोपेन नृणां विद्यादरुंषिकाम् ॥३१॥
पलितं-क्रोधशोकश्रमकृतः शरीरोष्मा शिरोगतः ।
पित्तं च केशान् पचति पलितं तेन जायते ॥३२॥

युवानपिडका

शाल्मलीकण्टकप्रख्याः कफमारुतरक्तजाः ।
युवानपिडका यूनां विज्ञेया मुखदूषिकाः ॥३३॥

पद्मिनीकण्टकम्

कण्टकैराचितं वृत्तं मण्डलं पाण्डुकण्डुरम् ।
पद्मिनीकण्टकप्रख्यैस्तदाख्यं कफवातजम् ॥३४॥

जतुमणिः-सममुत्सन्नमरुजं मण्डलं कफरक्तजम् ।
सहजं लक्ष्म चैकेषां लक्ष्यो जतुमणिस्तु सः ॥३५॥
मषकम्-अवेदनं स्थिरं चैव यस्मिन् गात्रे प्रदृश्यते ।
माषवत्कृष्णमुत्सन्नमनिलान्मषकं तु तत् ॥३६॥

तिलकालिकाः

कृष्णानि तिलमात्राणि नीरुजानि समानि च ।
वातपित्तकफोच्छोषात्तान्विद्यात्तिलकालकान् ॥३७॥

न्यच्छं

महद्वा यदि वा चाल्पं श्यावं वा यदिवाऽसितम् ।
नीरुजं मण्डलं गात्रे न्यच्छमित्यभिधीयते ॥३८॥
व्यङ्गं-क्रोधायासप्रकुपितो वायुः पित्तेन संयुतः ।
मुखमागत्य सहसा मण्डलं विसृजत्यतः ॥३९॥
नीरुजं तनुकं श्यावं मुखे व्यङ्गं तमादिशेत् ।
नीलिका-कृष्णमेवंगुणं गात्रे मुखे वा नीलिकां विदुः ॥
परिवर्त्तिका-मर्दनात् पीडनाद्वाऽपि तथैवाप्यभिघाततः ।
मेढ्रचर्म यदा वायुर्भजते सर्वतश्चरन् ॥ ४१ ॥
तदा वातोपसृष्टत्वात् तच्चर्म परिवर्तते ।
मणेरधस्तात् कोशश्च ग्रन्थिरूपेण लम्बते ॥४२॥

सरुजां वातसंभूतां तां विद्यात् परिवर्तिकाम् ।
सकण्ड: कठिना चापि सैव श्लेष्मसमुत्थिता ॥४३॥

अवपाटिका—

अल्पीय:खां यदा हर्षाद्बलाद्गच्छेत् स्त्रियं नर: ।
हस्ताभिघातादपि वा चर्मण्युद्वर्तिते बलात् ॥४४॥
यस्यावपाटयते चर्म तां विद्यादवपाटिकाम् ।

निरुद्धप्रकशं-वातोपसृष्टे मेढ्रे वै चर्म संश्रयते मणिम् ॥४५
मणिश्चर्मोपनद्धस्तु मूत्रस्रोतो रुणद्धि च ।
निरुद्धप्रकशे तस्मिन् मन्दधारमवेदनम् ॥ ४६ ॥
मूत्रं प्रवर्तते जन्तोर्मणिर्विव्रियते न च ।
निरुद्धप्रकशं विद्यात् सरुजं वातसम्भवम् ॥४७॥

संनिरुद्धगुदं:-वेगसंधारणाद्वायुर्विहतो गुदसंश्रित: ।
निरुणद्धि महास्रोत: सूक्ष्मद्वारं करोति च ॥४८॥
मार्गस्य सौक्ष्म्यात् कृच्छ्रेण पुरीषं तस्य गच्छति
सन्निरुद्धगुदं व्याधिमेतं विद्यात् सुदारुणम् ॥४९॥

अहिपूतनं:-शकृन्मूत्रसमायुक्तेऽधौतेऽपाने शिशोर्भवेत् ।
स्विन्ने वाऽस्नाप्यमाने वा कण्डू रक्तकफोद्भवा ॥५०॥
कण्डूयनात्तत: क्षिप्रं स्फोटः स्रावश्च जायते ।

एकीभूतं व्रणैर्घोरं तं विद्यादहिपूतनम् ॥ ५१ ॥

वृषणकच्छूः-स्नानोत्सादनहीनस्य मलो वृषणसंस्थितः

यदा प्रक्लिद्यते स्वेदात् कण्डूं जनयते तदा ॥५२॥

कण्डूयनात्ततः क्षिप्रं स्फोटः स्रावश्च जायते ।

प्राहुर्वृषणकच्छूं तां श्लेष्मरक्तप्रकोपजाम् ॥ ५३ ॥

गुदभ्रंशः-प्रवाहणातीसाराभ्यां निर्गच्छति गुदं वहिः ।

रूक्षदुर्बलदेहस्य गुदभ्रंशं तमादिशेत् ॥ ५४ ॥

शूकरदंष्ट्रकः-सदाहो रक्तपर्यन्तस्त्वक्पाकी तीव्रवेदनः ।

कण्डूमान् ज्वरकारी च स स्याच्छूकरदंष्ट्रकः ॥५५

इति श्रीमाधवकरविरचिते माधवनिदाने

क्षुद्ररोग-निदानं समाप्तम् ।

## अथ मुखरोग-निदानम् ।

हेतुः-आनूपपिशितक्षीरदधिमत्स्यातिसेवनात् ।

मुखमध्ये गदान् कुर्युः क्रुद्धा दोषाः कफोत्तराः ॥१

वातजौः-कर्कशौ परुषौ स्तब्धौ संप्राप्तानिलवेदनौ ।

दाल्येते परिपाटयेते ओष्ठौ मारुतकोपतः ॥२॥

पित्तजौ—चीयेते पिडकाभिश्च सरुजाभिः समन्ततः ।
सदाहपाकपिडकौ पीताभासौ च पित्ततः ॥३॥
कफजौ—सवर्णाभिश्च चीयेते पिडकाभिरवेदनौ ।
भवतस्तु कफादोष्ठौ पिच्छिलौ शीतलौ गुरू ॥४॥
त्रिदोषजौ-सकृत्कृष्णौ सकृत्पीतौ सकुच्छ्वेतौ तथैव च ।
सन्निपातेन विज्ञेयावनेकपिडकाचितौ ॥ ५ ॥
रक्तजौ-खर्जूरफलवर्णाभिः पिडकाभिर्निपीडितौ ।
रक्तोपसृष्टौ रुधिरं स्रवतः शोणितप्रभौ ॥६॥
मांसजौ-गुरू स्थूलौ मांसदुष्टौ मांसपिण्डवदुद्गतौ ।
जन्तवश्चात्र मूर्च्छन्ति नरस्योभयतोमुखात् ॥७॥
मेदोजौ-सर्पिर्मण्डप्रतीकाशौ मेदसा कण्डुरौ गुरू ।
अच्छं स्फटिकसंकाशमास्रावं स्रवतो भृशम् ॥८॥
तयोर्व्रणो न संरोहेत् मृदुत्वं च न गच्छति ।
अभिघातजौ- क्षतजाभौविदीर्येते पाट्येते चाभिघाततः॥६।
ग्रथितौ च तथास्यातामोष्ठौ कण्डूसमन्वितौ

पञ्चदश दन्तमूलरोगाः...

शीतादः-शोणितं दन्तवेष्टेभ्यो यस्याऽकस्मात्प्रवर्तते ।
दुर्गन्धीनि सकृष्णानि प्रक्लेदीनि मृदूनि च ॥१०॥

दन्तमांसानि शीर्यन्ते पचन्ति च परस्परम् ।
शीतादो नाम स व्याधिः कफशोणितसंभवः ॥११॥

दन्तपुप्पुटकः—

दन्तयोस्त्रिषु वा यस्य श्वयथुर्जायते महान् ।
दन्तपुप्पुटको नाम स व्याधिः कफरक्तजः ॥१२॥

दन्तवेष्टः-स्रवन्ति पूयरुधिरं हि चला दन्ता भवन्ति च ।
दन्तवेष्टः स विज्ञेयो दुष्टशोणितसंभवः ॥१३॥

शौषिरः-श्वयथुर्दन्तमूलेषु रुजावान् कफरक्तजः ।
लालास्रावी स विज्ञेयः शौषिरो नाम नामतः ॥१४॥

महाशौषिरः-दन्ताश्चलन्ति वेष्टेभ्यस्तालु चाप्यवदीर्यते ।
यस्मिन् स सर्वजो व्याधिर्महाशौषिरसंज्ञितः ॥१५॥

परिदरः—

दन्तमांसानि शीर्यन्ते यस्मिन् ष्ठीवति चाप्यसृक् ।
पित्तासृक्कफजो व्याधिर्ज्ञेयः परिदरो हि सः ॥१६॥

सोपकुशः—

वेष्टेषु दाहः पाकश्च ताभ्यां दन्ताश्चलन्ति च ।
यस्मिन् सोपकुशो नाम पित्तरक्तकृतो गदः ॥१७॥

वैदर्भः-घृष्टेषु दन्तमांसेषु संरम्भो जायते महान् ।

चला भवन्ति दन्ताश्च स वैदर्भोऽभिघातजः ॥१८॥

खलिवर्धनं-मारुतेनाधिको दन्तो जायते तीव्रवेदनः ।

खलिवर्धनसंज्ञोऽसौ जाते रुक्च प्रशाम्यति ॥१६॥

करालः-शनैः शनैः प्रकुरुते वायुर्दन्तसमाश्रितः ।

करालान्विकटान्दन्तान्करालो न स सिद्ध्यति ॥२०॥

अधिमांसकः—

हानव्ये पश्चिमे दन्ते महान् शोथो महारुजः ।

लालास्रावी कफकृतो विज्ञेय :सोऽधिमांसकः ।

दन्तनाड्यः-दन्तमूलगता नाड्यः पञ्च ज्ञेया यथेरिताः ॥२१

दालनः-दीर्यमाणेष्विव रुजा यस्य दन्तेषु जायते ।

अष्टौ दन्तजरोगानाह—

दालनो नाम स व्याधिः सदागतिनिमित्तजः ॥२२॥

क्रिमिदन्तकः—

कृष्णच्छिद्रश्चलः स्रावी ससंरम्भो महारुजः ।

अनिमित्तरुजो वाताद्विज्ञेयः क्रिमिदन्तकः ॥२३॥

भंजनकः-वक्त्रं वक्रं भवेद्यस्य दन्तभङ्गश्च जायते ।

कफवातकृतो व्याधिः स भञ्जनकसंज्ञितः ॥२४॥

दन्तहर्षः-शीतरूक्षप्रवाताम्लस्पर्शानामसहा द्विजाः ।

पित्तमारुतकोपेन दन्तहर्षः स नामतः ।। २५ ।।

दन्तशर्करा-मलो दन्तगतो यस्तु पित्तमारुतशोषितः ।

शर्करेव खरस्पर्शा सा ज्ञेया दन्तशर्करा ।। २६ ।।

कपालिका-कपालेष्विव दीर्यत्सु दन्तानां सैव शर्करा ।

कपालिकेति विज्ञेया सदा दन्तविनाशिनी ।। २७ ।।

श्यावदन्तकः-योऽसृटङ्मिश्रेण पित्तेन दग्धो दन्तस्त्वशेषतः

श्यावतां नीलतां वापि गतः स श्यावदन्तकः ।।२८।।

दन्तविद्रधिः-दन्तमांसे मलैः सास्रैर्बाह्यान्तःश्वयथुर्गुरुः

सदाहरुक्स्रवेद्भिन्नः पूयास्रं दन्तविद्रधिः ।। २९ ।।

पञ्च जिह्वारोगानाह—

वातजा-जिह्वाऽनिलेन स्फुटिता प्रसुप्ता

भवेच्च शाकच्छदनप्रकाशा ।

पित्तजा-पित्तेन दह्यत्युपचीयते च

दीर्घैः सरक्तैरपि कण्टकैश्च ।

कफजा-कफेन गुर्वी बहुला चिता च

मांसोच्छ्रयैः शाल्मलिकण्टकाभैः ।। ३० ।।

अलासः-जिह्वातले यः श्वयथुः प्रगाढः

सोऽलाससंज्ञः कफरक्तमूर्तिः ।

उपजिह्वा-जिह्वां स तु स्तम्भयति प्रवृद्धो
मूले च जिह्वा भृशमेति पाकम् ॥ ३१ ॥
जिह्वाग्ररूपः श्वयथुर्हि जिह्वा-
मुन्नम्य जातः कफरक्तमूलः ।
लालाकरः कण्डुयुतः सचोषः
सा तूपजिह्वा पठिता भिषग्भिः ॥ ३२ ॥

नव तालुरोगानाह—

कण्ठशुण्डी-श्लेष्मासृग्भ्यां तालुमूले प्रवृद्धो
दीर्घः शोथो ध्मातवस्तिप्रकाशः ।
तृष्णाकासश्वासंकृत्तं वदन्ति
व्याधिं वैद्याः कण्ठशुण्डीति नाम्ना ॥ ३३ ॥
तुण्डीकेरी-शोथः स्थूलस्तोददाहप्रपाकी
प्रगुक्ताभ्यां तुण्डिकेरी मता तु ।
अध्रुषः-मृदुः शोथो लोहितः शोणितोत्थो
ज्ञेयोऽध्रुषः सज्वरस्तीव्ररुक् च ॥ ३४ ॥
कच्छपः-कूर्मोन्नतोऽवेदनोऽशीघ्रजन्मा
रोगो ज्ञेयः कच्छपः श्लेष्मणा तु ।
अर्बुदः-पद्माकारं तालुमध्ये तु शोथं

विद्याद्रक्तादर्बुदं प्रोक्तलिङ्गम् ॥ ३५ ॥

मांससंघातः-दुष्टं मांसं नीरुजं तालुमध्ये
कफाच्छूनं मांससंघातमाहुः ।

पुप्पुटः-नीरुक् स्थायी कोलमात्रः कफात् स्यात्
मेदोयुक्तात् पुप्पुटस्तालुदेशे ॥ ३६ ॥

तालुशोषः-शोषोऽत्यर्थं दीर्यते चापि तालुः
श्वासश्चोग्रस्तालुशोषोऽनिलाच्च ।

तालुपाकः-पित्तं कुर्यात् पाकमत्यर्थघोरं
तालुन्येनं तालुपाकं वदन्ति ॥ ३७ ॥

रोहिणी-गलेऽनिलः पित्तकफौ च मूर्च्छितौ
प्रदूष्य मांसं च तथैव शोणितम् ।
गलोपसंरोधकरैस्तथाङ्कुरै-
र्निहन्त्यसून् व्याधिरियं हि रोहिणी ॥ ३८ ॥

वातजा-जिह्वासमन्ताद् भृशवेदनास्तु
मांसाङ्कुराः कण्ठविरोधिनो ये ।
सा रोहिणी वातकृता प्रदिष्टा
वातात्मकोपद्रवगाढयुक्ता ॥ ३९ ॥

पित्तजा-क्षिप्रोद्गमा क्षिप्रविदाहपाका

तीव्रज्वरा पित्तनिमित्तजा तु ।
कफजा-स्रोतोविरोधिन्यचलोद्गता च
स्थिराङ्कुरा या कफसंभवा सा ॥ ४० ॥
त्रिदोषजा-गम्भीरपाकिन्यनिवार्यवीर्या
त्रिदोषलिङ्गा त्रितयोत्थिता च ।
रक्तजा-स्फोटैश्चिता पित्तसमानलिङ्गा
साध्या प्रदिष्टा रुधिरात्मिका तु ॥ ४१ ॥
कण्ठशालूकः-कोलास्थिमात्रः कफसंभवो यो
ग्रन्थिर्गले कण्टकशूकभूतः ।
खरः स्थिरः शस्त्रनिपातसाध्य-
स्तं कण्ठशालूकमिति ब्रुवन्ति ॥ ४२ ॥
अधिजिह्वः--जिह्वाग्ररूपः श्वयथुः कफात्तु
जिह्वोपरिष्टादपि रक्तमिश्रात् ।
ज्ञेयोऽधिजिह्वः खलु रोग एष
विवर्जयेदागतपाकमेनम् ॥ ४३ ॥
वलयः-बलाशएवायतमुन्नतं च
शोथं करोत्यन्नगतिं निवार्य ।
तं सर्वथैवाप्रतिवार्यवीर्यं

विवर्जनीयं वलयं वदन्ति ॥ ४४ ॥

बलाशकः—गले तु शोथं कुरुतः प्रवृद्धौ
इलेष्मानिलौ श्वासरुजोपपन्नम् ।
मर्मच्छिदं दुस्तरमेनमाहु-
र्बलाशसंज्ञं निपुणा विकारम् ॥ ४५ ॥

एकवृन्दः—वृत्तोन्नतोऽन्तःश्वयथुः सदाहः
सकण्डुरोऽपाक्यमृदुर्गुरुश्च ।
नाम्नैकवृन्दः परिकीर्तितोऽसौ
व्याधिर्बलाशक्षतजप्रसूतः ॥ ४६ ॥

वृन्दः—समुन्नतं वृत्तममन्ददाहं
तीव्रज्वरं वृन्दमुदाहरन्ति ।
तच्चापि पित्तक्षतजप्रकोपा-
ज्ज्ञेयं सतोदं पवनात्मकं तु ॥ ४७ ॥

शतघ्नी—वर्तिर्घना कण्ठनिरोधिनी या
चिताऽतिमात्रं पिशितप्ररोहैः ।
अनेकरुक् प्राणहरी त्रिदोषा-
ज्ज्ञेया शतघ्नी च शतघ्निरूपा ॥ ४८ ॥

गलायुः—ग्रंथिर्गले त्वामलकास्थिमात्रः

स्थिरोऽतिरुग्यः कफरक्तमूर्तिः ।
संलक्ष्यते सक्तमिवाशनं च
स शस्त्रसाध्यस्तु गलायुसंज्ञः ॥ ४६ ॥

गलविद्रधिः—सर्वं गलं व्याप्य समुत्थितो यः
शोथो रुजः सन्ति च यत्र सर्वाः ।
स सर्वदोषैर्गलविद्रधिस्तु
तस्यैव तुल्यः खलु सर्वजस्य ॥ ५० ॥

गलौघः—शोथे महानन्नजलावरोधी
तीव्रज्वरो वायुगतेर्निहन्ता ।
कफेन जातो रुधिरान्वितेन
गले गलौघः परिकीर्त्यते तु ॥ ५१ ॥

स्वरघ्नः—यस्ताम्यमानः श्वसिति प्रसक्तं
भिन्नस्वरः शुष्कविमुक्तकण्ठः ।
कफोपदिग्धेष्वनिलायनेषु
ज्ञेयः स रोगः श्वसनात् स्वरघ्नः ॥ ५२ ॥

मांसतानः—प्रतानवान् यः श्वयथुः सुकष्टो
गलोपरोधं कुरुते क्रमेण ।
स मांसतानः कथितोऽवलम्बी

प्राणप्रणुत् सर्वकृतो विकारः ॥ ५३ ॥

विदारी—सदाहतोदं श्वयथुं सुताम्र-

मन्तर्गले पूतिविशीर्णमांसम् ।

पित्तेन विद्याद्वदने विदारीं

पार्श्वे विशेषात् स तु येन शेते ॥ ५४ ॥

त्रीन् सर्वमुखजानाह-वातसर्वसरः—

स्फोटैः सतोदैर्वदनं समन्ता-

द्यस्याचितं सर्वसरः स वातात् ।

पित्तसर्वसरः—रक्तैः सदाहैस्तनुभिः सपीतै-

र्यस्याचितं चापि स पित्तकोपात् ।

कफसर्वसरः—अवेदनैः कण्डुयुतैः सवर्णै-

र्यस्याचितं चापि स वै कफेन ॥ ५५ ॥

असाध्यान् दर्शयति—

ओष्ठवर्ज्याः—ओष्ठप्रकोपे वर्ज्याः स्युर्मांसरक्तत्रिदोषजाः ।

दन्तमूलवर्ज्यौ—दन्तमूलेषु वर्ज्यौ च

त्रिलिङ्गगतिशौषिरौ ॥ ५६ ॥

दन्तवर्ज्यौः—दन्तेषु च न सिध्यन्ति श्यावदालनभञ्जनाः

जिह्वातालुवर्ज्यौ—जिह्वारोगे वलाशस्तु

तालव्येष्वर्बुदं तथा ॥ ५७ ॥

गलवर्ज्याः—स्वरघ्नो वलयो वृन्दो बलाशश्च विदारिका ।
गलौघो मांसतानश्च शतघ्नी रोहिणी गले ॥ ५८ ॥
असाध्याः कीर्तिता ह्येते रोगा नव दशैव तु ।
तेषु चापि क्रियां वैद्यः प्रत्याख्याय समाचरेत् ॥५९॥

इति श्रीमाधवकरविरचिते-माधवनिदाने
मुखरोग-निदानं समाप्तम् ॥

## अथ कर्णरोग-निदानम् ।

कर्णशूलः—समीरणः श्रोत्रगतोऽन्यथाचरन्
समन्ततः शूलमतीव कर्णयोः ।
करोति दोषैश्च यथास्वमावृतः
स कर्णशूलः कथितो दुराचरः ॥ १ ॥

कर्णनादः—

कर्णस्रोतःस्थिते वाते शृणोति विविधान् स्वरान् ।
भेरीमृदङ्गशङ्खानां कर्णनादः स उच्यते ॥ २ ॥

बधिरता—यदा शब्दवहं वायुः स्रोत आवृत्य तिष्ठति ।
शुद्धः श्लेष्मान्वितो वाऽपि बाधिर्यं तेन जायते ॥३॥

कर्णक्ष्वेडः—वायुः पित्तादिभिर्युक्तो वेणुघोषोपमं स्वनम् ।
करोति कर्णयोः क्ष्वेडं कर्णक्ष्वेडः स उच्यते ॥ ४ ॥

कर्णस्रावः—शिरोऽभिघातादथवा निमज्जतो
जले प्रपाकादथवाऽपि विद्रधेः ।
स्रवेद्धि पूयं श्रवणोऽनिलार्दितः
स कर्णसंस्राव इति प्रकीर्तितः ॥ ५ ॥

कर्णकण्डूः—मारुतः कफसंयुक्तः कर्णकण्डूं करोति च ।

कर्णगूथः—

पित्तोष्मशोषितः श्लेष्मा कुरुते कर्णगूथकम् ॥ ६ ॥

कर्णप्रतिनाहः—स कर्णगूथो द्रवतां गतो यदा
विलायितो घ्राणमुखं प्रपद्यते ।
तदा स कर्णप्रतिनाहसंज्ञितो
भवेद्विकारः शिरसोऽर्धभेदकृत् ॥ ७ ॥

क्रिमिकर्णकः—यदा तु मूर्च्छन्त्यथवाऽपि जन्तवः,
सृजन्त्यपत्यान्यथवाऽपि मक्षिकाः ।
तदूव्यञ्जनत्वाच्छ्रवणो निरुच्यते,
भिषग्भिराद्यैः क्रिमिकर्णको गदः ॥ ८ ॥

कर्णकीटः—पतङ्गाः शतपद्यश्च कर्णस्रोतः प्रविश्य हि ।

अरतिं व्याकुलत्वं च भृशं कुर्वन्ति वेदनाम् ॥ ९ ॥
कर्णौ निस्तुद्यते तस्य तथा फरफरायते ।
कीटे चरति रुक्तीव्रा निष्पन्दे मन्दवेदना ॥१०॥

कर्णविद्रधिः-क्षताभिघातप्रभवस्तु विद्रधि-
र्भवेत्तथा दोषकृतोऽपरः पुनः ।
सरक्तपीतारुणमस्रमास्रवेत्
प्रतोदधूमायनदाहचोषवान् ॥ ११ ॥

कर्णपाकः-कर्णपाकस्तु पित्तेन कोथविक्लेदकृद्भवेत् ।
कर्णविद्रधिपाकाद्वा जायते चाम्बुपूरणात् ॥ १२ ॥

पूतिकर्णक-पूयं स्रवति यः पूति स ज्ञेयः पूतिकर्णकः ।

कर्णशोथादयः-कर्णशोथार्बुदार्शांसि जानीयादुक्तलक्षणैः ॥१३

दोषलिङ्गानि-नादोऽतिरुक् कर्णमलस्य शोषः
स्रावस्तनुश्चाश्रवणं च वातात् ।
शोथः सरागो दरणं विदाहः
सपीतपूतिस्रवणं च पित्तात् ॥ १४ ॥
वैश्रुत्यकण्डूस्थिरशोथशुक्ल-
स्निग्धस्रुतिः स्वल्परुजः कफाच्च ।
सर्वाणि रूपाणि च सन्निपातात्

स्रावश्च तत्राधिकदोषवर्णः ॥१५॥

परिपोटः-सौकुमार्याच्चिरोत्सृष्टे सहसाऽतिप्रवर्धिते ।

कर्णशोथो भवेत् पाल्यां सरुजः परिपोटवान् ॥

कृष्णारुणनिभः स्तब्धः स वातात् परिपोटकः ॥१६॥

उत्पातः-गुर्वाभरणसंयोगात्ताडनाद्धर्षणादति ।

शोथः पाल्यां भवेच्छयावोदाहपाकरुजान्वितः ॥१७॥

रक्तो वा रक्तपित्ताभ्यामुत्पातः स गदो मतः ॥

उन्मन्थकः-कर्णं बलाद्वर्धयतः पाल्यां वायुः प्रकुप्यति ॥१८॥

कफं संगृह्य कुरुते शोथं स्तब्धमवेदनम् ।

उन्मन्थकः सकण्डूको विकारः कफवातजः ॥१९॥

परिलेही-संवर्ध्यमाने दुर्विद्धे कण्डूपाकरुजान्वितः ।

शोथो भवति पाकश्च त्रिदोषो दुःखवर्धनः ॥२०॥

कफासृक्क्रिमयः क्रुद्धाः सर्षपाभा विसर्पिणः ।

कुर्वन्ति पाल्यां पिडकाः कण्डूदाहरुजान्विताः ॥२१॥

कफासृक्क्रिमिसंभूतः स विसर्पन्नितस्ततः ।

लिहेत् सशष्कुलीं पालीं परिलेहीति स स्मृतः ॥२२॥

इति श्रीमाधवकरविरचिते माधवनिदाने कर्णरोग-
निदानं समाप्तम् ।

# अथ नासारोग-निदानम

पीनसरोगः-आनह्यते यस्य विशुष्यते च
प्रक्लिद्यते धूप्यति चापि नासा ।
न वेत्ति यो गन्धरसांश्च जन्तु-
र्जुष्टं व्यवस्येत्तम पीनसेन ।
तं चानिलश्लेष्मभवं विकारं
ब्रूयात् प्रतिश्यायसमानलिङ्गम् ॥ १ ॥

पूतिनस्यरोगः-दोषैर्विदग्धैर्गलतालुमूले
संमूर्च्छितो यस्य समीरणस्तु ।
निरेति पूतिर्मुखनासिकाभ्यां
तं पूतिनस्यं प्रवदन्ति रोगम् ॥ २ ॥

नासापाकः-घ्राणाश्रितं पित्तमरूंषि कुर्या-
द्यस्मिन् विकारे बलवांश्च पाकः ।
तं नासिकापाकमिति व्यवस्ये-
द्विक्लेदकोथावथवाऽपि यत्र ॥ ३ ॥

पूयरक्तरोग -दोषैर्विदग्धैरथवाऽपि जन्तो-
र्ललाटदेशेऽभिहतस्य तैस्तैः ।

नासा स्रवेत् पूयमसृग्विमिश्रं
तं पूयरक्तं प्रवदन्ति रोगम् ।। ४ ।।

क्षवथुः-घ्राणाश्रिते मर्मणि संप्रदुष्टो
यस्यानिलो नासिकया निरेति ।
कफानुजातो बहुशोऽतिशब्द-
स्तं रोगमाहुः क्षवथुं विधिज्ञाः ।। ५ ।।

आगन्तुजक्षवथुः-तीक्ष्णोपयोगादभिजिघ्रतो वा
भावान् कटूनर्कनिरीक्षणाद्वा ।
सूत्रादिभिर्वा तरुणास्थिमर्म-
ण्युद्घाटितेऽन्यः क्षवथुर्निरेति ।। ६ ।।

भ्रंशथुः-प्रभ्रश्यते नासिकया तु यस्य
सान्द्रो विदग्धो लवणः कफस्तु ।
प्राक्संचितो मूर्धनि सूर्यतप्त-
स्तं भ्रंशथुं रोगमुदाहरन्ति ।। ७ ।।

दीप्तरोगः-घ्राणे भृशं दाहसमन्विते तु
विनिःसरेद् धूम इवेह वायुः ।
नासा प्रदीप्तेव च यस्य जन्तो-
र्व्याधिं तु तं दीप्तमुदाहरन्ति ।। ८ ।।

प्रतीनाहः-उच्छ्वासमार्गं तु कफः सवातो

रुन्ध्यात् प्रतीनाहमुदाहरेत्तम् ॥ ९ ॥

नासाशोषः-घ्राणाश्रिते स्रोतसि मारुतेन

गाढं प्रतप्ते परिशोषिते च ।

कृच्छ्राच्छ्वसेदूर्ध्वमधश्च जन्तु-

र्यस्मिन् स नासापरिशोष उक्तः ॥ १० ॥

आमपीनसः-शिरोगुरुत्वमरुचिर्नासास्रावस्तनुः स्वरः ।

क्षामः ष्ठीवत्यथाभीक्ष्णमामपीनसलक्षणम् ॥११॥

पक्वपीनसः—

आमलिङ्गान्वितः श्लेष्मा घनः खेषु निमज्जति ।

स्वरवर्णविशुद्धिश्च परिपक्वस्य लक्षणम् ॥ १२ ॥

प्रतिश्यायकारणानि-संधारणाऽजीर्णरजोऽतिभाष्य

क्रोधर्तुवैषम्यशिरोऽभितापैः ।

प्रजागरातिस्वपनाम्बुशीतैरवश्यया मैथुनवाष्पधूमैः ।

संस्त्यानदोषे शिरसि प्रवृद्धो

वायुः प्रतिश्यायमुदीरयेत्तु ॥ १३ ॥

चयं गता मूर्धनि मारुतादयः

पृथक् समस्ताश्च तथैव शोणितम् ।

प्रकुप्यमाणा विविधैः प्रकोपणै-
स्ततः प्रतिश्यायकरा भवन्ति हि ॥ १४ ॥

पूर्वरूपं-क्षवप्रवृत्तिः शिरसोऽतिपूर्णता
स्तम्भोऽङ्गमर्दः परिहृष्टरोमता ।
उपद्रवाश्चाप्यपरे पृथग्विधा
नृणां प्रतिश्यायपुरःसराः स्मृताः ॥ १५ ॥

वातजः-आनद्धा पिहिता नासा तनुस्रावप्रसेकिनी ।
गलताल्वोष्ठशोषश्च निस्तोदः शङ्खयोस्तथा ॥ १६ ॥
क्षवप्रवृत्तिरत्यर्थं वक्त्रवैरस्यमेव च ।
भवेत् स्वरोपघातश्च प्रतिश्यायेऽनिलात्मके ॥ १७ ॥

पित्तजः—

उष्णः सपीतकः स्रावो घ्राणात् स्रवति पैत्तिके ।
कृशोऽतिपाण्डुः संतप्तो भवेदुष्णाभिपीडितः ॥१८॥
सधूममग्निं सहसा वमतीव स मानवः ।

कफजः—

घ्राणात् कफः कफकृते शीतः पाण्डुः स्रवेद्बहुः ।
शुक्लावभासः शुक्लाक्षो भवेद् गुरुशिरा नरः ॥ १९ ॥
कण्ठताल्वोष्ठशिरसां कण्डूभिरभिपीडितः ।

सर्वजः-भूत्वा भूत्वा प्रतिश्यायो यस्याऽकस्मान्निवर्तते ॥२०॥
संपक्को वाऽप्यपक्को वा स सर्वप्रभवः स्मृतः ।
दुष्टप्रतिश्यायः-प्रक्लिद्यते पुनर्नासा पुनश्च परिशुष्यति ॥२१॥
पुनरानह्यते वाऽपि पुनर्विव्रियते तथा ।
निःश्वासो वाऽतिदुर्गन्धो नरो गन्धान् न वेत्ति च ॥२२॥
एवं दुष्टप्रतिश्यायं जानीयात् कृच्छ्रसाधनम् ।
रक्तजः-रक्तजे तु प्रतिश्याये रक्तस्रावः प्रवर्तते ॥ २३ ॥
ताम्राक्षश्च भवेज्जन्तुरुरोघातप्रपीडितः ।
दुर्गन्धोच्छ्वासवदनो गन्धानपि न वेत्ति सः ॥२४॥
असाध्यहेतुः-सर्व एवप्रतिश्याया नरस्याप्रतिकारिणः ।
दुष्टतां यान्ति कालेन तदाऽसाध्या भवन्ति हि ॥२५॥

नासाक्रिमिः—

मूर्च्छन्तिः चात्रक्रिमय श्वेताः स्निग्धास्तथाणऽवः
क्रिमितो यः शिरोरोगस्तुल्यं तेनास्य लक्षणम् ॥२६॥

वृद्धपीनसानामुपद्रवाः—

बाधिर्यमान्ध्यमघ्रत्वं घोरांश्च नयनामयान् ।
शोथाग्निसादकासांश्च वृद्धाः कुर्वन्ति पीनसाः ॥२७॥

नासार्बुदादयः—

अर्बुदं सप्तधा शोथाश्चत्वारोऽर्शश्चतुर्विधम् ।

चतुर्विधं रक्तपित्तमुक्तं घ्राणेऽपि तद्विदुः ॥ २८ ॥

इति श्रीमाधवकरविरचिते-माधवनिदाने

नासारोग-निदानं समाप्तम् ॥

---

# अथ नेत्ररोग-निदानम् ।

नेत्ररोगकारणानि-उष्णाभितप्तस्य जले प्रवेशाद्

दूरेक्षणात् स्वप्नविपर्ययाच्च ।

स्वेदाद्रजोधूमनिषेवणाच्च

छर्दे र्विघाताद्वमनातियोगात् ॥ १ ॥

द्रवात्तथाऽन्नान्निशि सेविताच्च

विण्मूत्रवातक्रमनिग्रहाच्च ।

प्रसक्तसंरोदनकोपशोका-

च्छिरोऽभिघातादतिमद्यपानात् ॥ २ ॥

तथाऽऋतूनां च विपर्ययेण क्लेशाभिघातादतिमैथुनाच्च ।

वाष्पग्रहात् सूक्ष्मनिरीक्षणाच्च

नेत्रे विकारान् जनयन्ति दोषाः ॥ ३ ॥

समस्तनेत्राश्रितरोगानाह—

अभिष्यन्दाः—

वातात् पित्तात् कफाद्रक्तादभिष्यन्दश्चतुर्विधः ।
प्रायेण जायते घोरः सर्वनेत्रामयाकरः ॥ ४ ॥

वातजाऽभिष्यन्दः—

निस्तोदनस्तम्भनरोमहर्षसंघर्षपारुष्यशिरोऽभितापाः
विशुष्कभावः शिशिराश्रुता च
वाताभिपन्ने नयने भवन्ति ॥ ५ ॥

पित्तजाऽभिष्यन्दः-दाहप्रपाकौ शिशिराभिनन्दा
धूमायनं वाष्पसमुच्छ्रयश्च ।
उष्णाश्रुता पीतकनेत्रता च
पित्ताभिपन्ने नयने भवन्ति ॥ ६ ॥

कफजाऽभिष्यन्दः-उष्णाभिनन्दा गुरुताऽक्षिशोथः
कण्डूपदेहावतिशीतता च ।
स्रावो मुहुः पिच्छिल एव चापि
कफाभिपन्ने नयने भवन्ति ॥ ७ ॥

रक्तजाऽभिष्यन्दः-ताम्राश्रुता लोहितनेत्रता च
नाड्यः समन्तादतिलोहिताश्च ।

पित्तस्य लिङ्गानि च यानि तानि ।
रक्ताभिपन्ने नयने भवन्ति ॥८॥

चत्वार अधिमन्थाः—

वृद्धैरेतैरभिष्यन्दैर्नराणामक्रियावताम् ।
तावन्तस्त्वधिमन्थाः स्युर्नयने तीव्रवेदनाः ॥९॥

तत्सामान्यरूपम्—

उत्पाट्यत इवात्यर्थं नेत्रं निर्मथ्यते तथा ।
शिरसोऽर्धं च तं विद्यादधिमन्थं स्वलक्षणैः ॥१०॥

मिथ्याचाराद् दोषभेदेनाधिमन्थकृतो नेत्रनाशावधिः—

हन्याद् दृष्टिं श्लैष्मिकः सप्तरात्राद्
धीमन्थो रक्तजः पञ्चरात्रात् ।
षड्रात्राद्वातिको वै निहन्यात्
मिथ्याचारात् पैत्तिकः सद्य एव ॥११॥

सामस्वरूपम्-उदीर्णवेदनं नेत्रं रागशोथसमन्वितम् ।
घर्षनिस्तोदशूलाश्रुयुक्तमामान्वितं विदुः ॥१२॥

निरामस्वरूपं-मन्दवेदनता कण्डूः संरम्भाश्रुप्रशान्तता ।
प्रशस्तवर्णता चाक्ष्णोः संपक्वं दोषमादिशेत् ॥१३॥

शोथजः पाकः-कण्डूपदेहाश्रुयुतः पक्वोदुम्बरसन्निभः ।

संरम्भी पच्यते यस्तु नेत्रपाकः स शोथजः ।

अशोथजः पाकः—

शोथहीनानि लिङ्गानि नेत्रपाके त्वशोथजे ॥१४॥

हताधिमन्थः-उपेक्षणादक्षि यदाऽधिमन्थो
वातात्मकः सादयति प्रसह्य ।
रुजाभिरुग्राभिरसाध्य एष
हताधिमन्थः खलु नाम रोगः ॥१५॥

पातपर्ययः-बारंबारं च पर्येति भ्रुवौ नेत्रे च मारुतः ।
रुजश्च विविधास्तीव्राः स ज्ञेयो वातपर्ययः ॥१६॥

शुष्काक्षिपाकः-यत् कूणितं दारुणरूक्षवर्त्म
संदह्यते चाविलदर्शनं यत् ।
सुदारुणं यत प्रतिबोधने च
शुष्काक्षिपाकोपहतं तदक्षि ॥१७॥

अन्यतोवातः-यस्यावटुकर्णशिरोहनुस्थो
मन्यागतो वाऽप्यनिलोऽन्यतो वा ।
कुर्याद्रुजं वै भ्रुवि लोचने च
तमन्यतोवातमुदाहरन्ति ॥१८॥

अम्लाध्युषितं-श्यावं लोहितपर्यन्तं सर्वं चाक्षि प्रपच्यते ।

पित्तस्य लिङ्गानि च यानि तानि ।
रक्ताभिपन्ने नयने भवन्ति ॥८॥

चत्वार अधिमन्थाः—

वृद्धैरेतैरभिष्यन्दैर्नराणामक्रियावताम् ।
तावन्तस्त्वधिमन्थाः स्युर्नयने तीव्रवेदनाः ॥९॥

तत्सामान्यरूपम्—

उत्पाट्यत इवात्यर्थं नेत्रं निर्मथ्यते तथा ।
शिरसोऽर्धं च तं विद्यादधिमन्थं स्वलक्षणैः ॥१०॥

मिथ्याचाराद् दोषभेदेनाधिमन्थकृतो नेत्रनाशावधिः—

हन्याद् दृष्टिं श्लैष्मिकः सप्तरात्राद्
धीमन्थो रक्तजः पञ्चरात्रात् ।
षड्रात्राद्वातिको वै निहन्यात्
मिथ्याचारात् पैत्तिकः सद्य एव ॥११॥

सामत्वरूपम्-उदीर्णवेदनं नेत्रं रागशोथसमन्वितम् ।
घर्षनिस्तोदशूलाश्रुयुक्तमामान्वितं विदुः ॥१२॥

निरामत्वरूपं-मन्दवेदनता कण्डूः संरम्भाश्रुप्रशान्तता ।
प्रशस्तवर्णता चाक्ष्णोः संपक्वं दोषमादिशेत् ॥१३॥

शोथजः पाकः-कण्डूपदेहाश्रुयुतः पक्वोदुम्बरसन्निभः ।

संरम्भी पच्यते यस्तु नेत्रपाकः स शोथजः ।

अशोथजः पाकः—

शोथहीनानि लिङ्गानि नेत्रपाके त्वशोथजे ॥१४॥

हताधिमन्थः-उपेक्षणादक्षि यदाऽधिमन्थो
वातात्मकः सादयति प्रसह्य ।
रुजाभिरुग्राभिरसाध्य एष
हताधिमन्थः खलु नाम रोगः ॥१५॥

वातपर्ययः-बारंबारं च पर्येति भ्रुवौ नेत्रे च मारुतः ।
रुजश्च विविधास्तीव्राः स ज्ञेयो वातपर्ययः ॥१६॥

शुष्काक्षिपाकः-यत् कूणितं दारुणरूक्षवर्त्म
संदह्यते चाविलदर्शनं यत् ।
सुदारुणं यत् प्रतिबोधने च
शुष्काक्षिपाकोपहतं तदक्षि ॥१७॥

अन्यतोवातः-यस्यावटुकर्णशिरोहनुस्थो
मन्यागतो वाऽप्यनिलोऽन्यतो वा ।
कुर्याद्रुजं वै भ्रुवि लोचने च
तमन्यतोवातमुदाहरन्ति ॥१८॥

अम्लाध्युषितं-श्यावं लोहितपर्यन्तं सर्वं चाक्षि प्रपच्यते ।

शङ्खेन्दुकुन्दप्रतिमावभासम् ।
वैहायसाभ्रप्रतनुप्रकाशमथाव्रणं साध्यतमं वदन्ति ॥२४॥

तस्य कृच्छ्रसाध्यलक्षणम्-गम्भीरजातं बहुलं च शुक्लं
चिरोत्थितं चापि वदन्ति कृच्छ्रम् ।

तस्य असाध्यलक्षणम्-विच्छिन्नमध्यं पिशितावृतं वा
चलं सिरासूक्ष्ममदृष्टिकृच्च ।
द्वित्वग्गतं लोहितमन्ततश्च
चिरोत्थितं चापि विवर्जनीयम् ॥२५॥

अपरम् असाध्यलक्षणम्-उष्णाश्रुपातः पिडका च नेत्रे
यस्मिन् भवेन्मुद्गनिभं च शुक्लम् ।
तदप्यसाध्यं प्रवदन्ति केचि-
दन्यच्च यत् तित्तिरिपक्षतुल्यम् ॥२६॥

अक्षिपाकात्ययः-श्वेतः समाक्रामति सर्वतो हि
दोषेण यस्यासितमण्डलं च ।
तमक्षिपाकात्ययमक्षिरोगं
सर्वात्मकं वर्जयितव्यमाहुः ॥२७॥

अजकाजातम्-अजापुरीषप्रतिमो रुजावान्
सलोहितो लोहितपिच्छिलास्रः ।

सदाहशोथं सास्रावमम्लाध्युषितमम्लतः ॥१९॥

सिरोत्पातः-अवेदना वाऽपि सवेदना वा
यस्याक्षिराज्यो हि भवन्ति ताम्राः ।
मुहुर्विरज्यन्ति च याः स तादृग्
व्याधिः सिरोत्पात इति प्रदिष्टः ॥२०॥

सिराहर्षः-मोहात्सिरोत्पात उपेक्षितस्तु ।
जायेत रोगस्तु सिराप्रहर्षः ।
ताम्राभमस्रं स्रवति प्रगाढं
तथा न शक्नोत्यभिवीक्षितुं च ॥२१॥

सव्रण-शुक्ररोगलक्षणम्-निमग्नरूपं तु भवेद्धि कृष्णे
सूच्येव विद्धं प्रतिभाति यद्वै ।
स्रावं स्रवेदुष्णमतीव यच्च
तत् सव्रणं शुक्र (क्र) मुदाहरन्ति ॥२२॥

तस्य सन्दिग्धसाध्यलक्षणम्-दृष्टेः समीपे न भवेत्तु यच्च
न चावगाढं न च संस्रवेद्धि ।
अवेदनं वा न च युग्मशुक्रं
तत् सिद्धिमायाति कदाचिदेव ॥२३॥

अव्रण-शुक्ररोगलक्षणम्-स्यन्दात्मकं कृष्णगतं सचोषं

शङ्खेन्दुकुन्दप्रतिमावभासम् ।
वैहायसाभ्रप्रतनुप्रकाशमथाव्रणं साध्यतमं वदन्ति ॥२४॥

तस्य कृच्छ्रसाध्यलक्षणम्-गम्भीरजातं बहुलं च शुक्लं
चिरोत्थितं चापि वदन्ति कृच्छ्रम् ।

तस्य असाध्यलक्षणम्-विच्छिन्नमध्यं पिशितावृतं वा
चलं सिरासूक्ष्ममदृष्टिकृच्च ।
द्वित्वग्गतं लोहितमन्ततश्च
चिरोत्थितं चापि विवर्जनीयम् ॥२५॥

अपरम् असाध्यलक्षणम्-उष्णाश्रुपातः पिडका च नेत्रे
यस्मिन् भवेन्मुद्गनिभं च शुक्लम् ।
तदप्यसाध्यं प्रवदन्ति केचि-
दन्यच्च यत् तित्तिरिपक्षतुल्यम् ॥२६॥

अक्षिपाकात्ययः-श्वेतः समाक्रामति सर्वतो हि
दोषेण यस्यासितमण्डलं च ।
तमक्षिपाकात्ययमक्षिरोगं
सर्वात्मकं वर्जयितव्यमाहुः ॥२७॥

अजकाजातम्-अजापुरीषप्रतिमो रुजावान्
सलोहितो लोहितपिच्छिलास्रः ।

विगृह्य कृष्णं प्रचयोऽभ्युपैति
तच्चाजकाजातमिति व्यवस्येत् ॥२८॥

पटलगतरोगानाह—

प्रथमपटलगतदोषः-प्रथमे पटले दोषा
यस्य दृष्ट्यां व्यवस्थिताः ।
अव्यक्तानि स रूपाणि कदाचिदथ पश्यति ॥२६॥

द्वितीयपटलगतः-दृष्टिर्भृशंविह्वलति द्वितीयं पटलं गते ।
मक्षिकामशकांश्चापि जालकानि च पश्यति ॥३०॥
मण्डलानि पताकांश्च मरीची न कुण्डलानि च ।
परिप्लवांश्च विविधान् वर्षमभ्रं तमांसि च ॥३१॥
दूरस्थानि च रूपाणि मन्यते स समीपतः ।
समीपस्थानि दूरे च दृष्टेर्गोचरविभ्रमात् ॥३२॥
यत्नवानपि चात्यर्थं सूचीपाशं न पश्यति ।

तृतीयपटलगतः—

ऊर्ध्वं पश्यति नाधस्तात् तृतीयं पटलं गते ॥३३॥
महान्त्यपि च रूपाणिच्छादितानीव चाम्बरैः ।
कर्णनासाक्षिहीनानि विकृतानीव पश्यति ॥३४॥
यथादोषं च रज्येत दृष्टिर्दोषे बलीयसि ।

अधःस्थिते समीपस्थं दूरस्थं चोपरिस्थिते ॥३५॥

पार्श्वस्थिते तथा दोषे पार्श्वस्थं नैव पश्यति ।

समन्ततः स्थिते दोषे संकुलानीव पश्यति ॥३६॥

दृष्टिमध्यस्थिते दोषे महद्ध्रस्वं च पश्यति ।

द्विधा स्थिते द्विधा पश्येद्बहुधा चानवस्थिते ॥३७॥

दोषे दृष्ट्याश्रिते तिर्यक् स एकं मन्यते द्विधा ।

चतुर्थपटलगतः—

तिमिराख्यः स वै दोषश्चतुर्थं पटलं गतः ॥३८॥

लिंगनाशः—रुणद्धि सर्वतो दृष्टिं लिङ्गनाशमतः परम् ।

अस्मिन्नपि तमोभूते नातिरूढे महागदे ॥ ३९ ॥

चन्द्रादित्यौ सनक्षत्रावन्तरीक्षे च विद्युतः ।

निर्मलानि च तेजांसि भ्राजिष्णून्यथ पश्यति ॥४०॥

लिंगनाशपर्यायौ—

स एव लिङ्गनाशस्तु नीलिका-काचसंज्ञितः ।

दृश्यवस्तुरूपेण दोषविवेकः—

वातरूपं—वातेन चापि रूपाणि भ्रमन्तीव च पश्यति ॥४१

आविलान्यरुणाभानि व्याविद्धानी व मानवः ।

पित्तरूपं—पित्तेनाऽऽदित्यखद्योतशक्रचापतडिद्गुणान् ॥४२

नृत्यतश्चैव शिखिनः सर्वं नीलं च पश्यति ।

कफरूपं—कफेन पश्येद्रूपाणि स्निग्धानि च सितानि च ॥

( पश्येदसूक्ष्माण्यत्यर्थं व्यभ्रमेवाभ्रसंप्लुतम् । )

सलिलप्लावितानीव परिजाड्यानि मानवः ।

रक्तरूपं—पश्येद्रक्तेन रक्तानि तमांसि विविधानि च ॥४४

त्रिदोषरूपं—

स सितान्यपि कृष्णानि पीतान्यपि च मानवः ।

सन्निपातेन चित्राणि विप्लुतानीव पश्यति ॥ ४५ ॥

बहुधा च द्विधा चापि सर्वाण्येव समन्ततः ।

हीनाधिकाङ्गान्यपि तु ज्योतींष्यपि च भूयसा ॥४६॥

परिम्लायि—

पित्तं कुर्यात् परिम्लायि मूर्च्छितं पित्ततेजसा ।

पीता दिशस्तु खद्योतान् भास्करं चापि पश्यति ॥४७

विकीर्यमाणान् खद्योतैर्वृक्षांस्तेजोभिरेव वा ।

लिंगनाशवर्ण—वक्ष्यामि षड्विधं रागैर्लिङ्गनाशमतःपरम्

रागोऽरुणो मारुतजः प्रदिष्टो

म्लायी च नीलश्च तथैव पित्तात् ।

कफात् सितः शोणितजः सरक्तः

समस्तदोषप्रभवो विचित्रः ॥ ४६ ॥

परिम्लायिमंडलवर्णम्—

अरुणं मण्डलं दृष्ट्यां स्थूलकाचारुणप्रभम् ।
परिम्लायिनि रोगे स्यान् म्लायि नीलं च मण्डलम् ।

लिंगनाशस्य दोषविशिष्टलक्षणम्--

दोषक्षयात् स्वयं तत्र कदाचित् स्यात्तु दर्शनम् ।
अरुणं मण्डलं वाताच्चञ्चलं परुषं तथा ॥५१॥
पित्तान्मण्डलमानीलं कांस्याभं पीतमेव च ।
श्लेष्मणा बहुलं पीतं शङ्खकुन्देन्दुपाण्डुरम् ॥५२॥
चलत्पद्मपलाशस्थः शुक्लो विन्दुरिवाम्भसः ।
मृज्यमाने च नयने मण्डलं तद्विसर्पति ॥५३॥
प्रवालपद्मपत्राभं मण्डलं शोणितात्मकम् ।
दृष्टिरागो भवेच्चित्रो लिङ्गनाशे त्रिदोषजे ।
यथास्वं दोषलिङ्गानि सर्वेष्वेव भवन्ति हि ॥५४॥

तत्संख्या—षड्लिङ्गनाशाः षडिमे च रोगा
दृष्ट्याश्रयाः षट् च षडेव वाच्याः ।

पित्तविदग्धदृष्टिः—पितेन दुष्टेन सदा तु दृष्टिः
पीता भवेद्यस्य नरस्य किंचित् ॥ ५५ ॥

पीतानि रूपाणि च तेन पश्येत्
स वै नरः पित्तविदग्धदृष्टिः ।
प्राप्ते तृतीयं पटलं तु दोषे
दिवा न पश्येन्निशि चेक्षते सः ॥ ५६ ॥
रात्रौ च शीतानुगृहीतदृष्टिः
पित्ताल्पभावादपि तानि पश्येत् ।

कफविदग्धदृष्टिः–तथा नरः श्लेष्मविदग्धदृष्टि-
स्तान्येव शुक्लानि तु मन्यते सः ॥ ५७ ॥
त्रिषु स्थितोऽल्पः पटलेषु दोषो
नक्तान्ध्यमापादयति प्रसह्य ।
दिवा स सूर्यानुगृहीतदृष्टिः
पश्येत्तु रूपाणि कफाल्पभावात् ॥ ५८ ॥

धूमदर्शी–शोकज्वरायासशिरोऽभिताप-
रभ्याहता यस्य नरस्य दृष्टिः ।
धूम्रांस्तथा पश्यति सर्वभावान्
स धूमदर्शीति नरः प्रदिष्टः ॥ ५९ ॥

ह्रस्वजाड्यः–यो ह्रस्वजाड्यो दिवसेषु कृच्छ्राद्
ध्रस्वानि रूपाणि च तेन पश्येत् ।

नकुलान्ध्यम्-विद्योतते यस्य नरस्य दृष्टि-
दोषाभिपन्ना नकुलस्य यद्वत् ॥ ६० ॥
चित्राणि रूपाणि दिवा स पश्येत्
स वै विकारो नकुलान्ध्यसंज्ञः ।
गम्भीरिका-दृष्टिर्विरूपा श्वसनोपसृष्टा
संकोचमभ्यन्तरतस्तु याति ॥ ६१ ॥
रुजावगाढा च तमक्षिरोगं
गम्भीरिकेति प्रवदन्ति तज्ज्ञाः ।
आगन्तुजो लिंगनाशः-बाह्यौ पुनर्द्वाविह संप्रदिष्टौ
निमित्ततश्चाप्यनिमित्ततश्च ॥ ६२ ॥
निमित्ततस्तत्र शिरोऽभितापा-
ज्ज्ञेयस्त्वभिष्यन्दनिदर्शनः सः ।
सुरर्षिगन्धर्वमहोरगाणां
संदर्शनेनापि च भास्करस्य ॥ ६३ ॥
हन्येत दृष्टिर्मनुजस्य यस्य
स लिङ्गनाशस्त्वनिमित्तसंज्ञः ।
तत्राक्षि विस्पष्टमिवावभाति
वैदूर्यवर्णा विमला च दृष्टिः ॥ ६४ ॥

अथ श्वेतमण्डलगता रोगाः ।

प्रस्तार्यर्म-प्रस्तार्यर्म तनु स्तीर्णं श्यावं रक्तनिभं सिते ।
शुक्लार्म-सश्वेतं मृदु शुक्लार्म शुक्ले तद्वर्धते चिरात् ॥६५॥
रक्तार्म-पद्माभं मृदु रक्तार्म यन्मांसं चीयते सिते ।
अधिमांसार्म-पृथु मृद्वधिमांसार्म बहलं च यकृन्निभम् ॥
स्नाय्वर्म-स्थिरं प्रस्तारि मांसाढ्यं
शुष्कं स्नाय्वर्म पञ्चमम् ॥ ६६ ॥
शुक्तिका-श्यावाः स्युः पिशितनिभाश्च विन्दवो ये
शुक्त्याभाः सितनियताः स शुक्तिसंज्ञः ।
अर्जुनम्-एको यः शशरुधिरोपमश्च विन्दुः
शुक्लस्थो भवति तमर्जुनं वदन्ति ॥ ६७ ॥
पिष्टकं-श्लेष्ममारुतकोपेन शुक्ले पिष्टं समुन्नतम् ।
पिष्टवत् पिष्टकं विद्धि मलाक्तादर्शसंनिभम् ॥ ६८ ॥
जालाख्यः-जालाभः कठिनसिरो महान् सरक्तः
सन्तानः स्मृत इह जालसंज्ञितस्तु ।
सिराजपिडिकाः-शुक्लास्थाः सितपिडकाः सिरावृता यास्-
स्ता ब्रूयादसितसमीपजाः सिराजाः ।
बलासः-कांस्याभोऽमृदुरथ वारिविन्दुकल्पो

विज्ञेयो नयनसिते बलाससंज्ञः ॥ ६९ ॥

अथ सन्धिगतनेत्ररोगाः । तत्र पूयालसलक्षणम्—

पक्वः शोथः सन्धिजो यः सतोदः

स्रवेत् पूयं पूति पूयालसाख्यः ।

उपनाहः-ग्रन्थिर्नाल्पो दृष्टिसन्धावपाकी

कण्डूप्रायो नीरुजस्तूपनाहः ॥ ७० ॥

अश्रुस्रावः—नेत्रनाडी वा—

गत्वा सन्धीनश्रुमार्गेण दोषाः

कुर्युः स्रावान् लक्षणैः स्वैरुपेतान् ।

तं हि स्रावं नेत्रनाडीति चैके

तस्या लिङ्गं कीर्तयिष्ये चतुर्धा ॥ ७१ ॥

तत्र पूयस्रावः-पाकात्सन्धौ संस्रवेद्यस्तु पूयं

पूयास्रावोऽसौ गदः सर्वजस्तु ।

कफस्रावः-श्वेतं सान्द्रं पिच्छिलं यः स्रवेत्तु

श्लेष्मास्रावोऽसौ विकारो मतस्तु ॥७२॥

रक्तस्रावः-रक्तस्रावः शोणितोत्थो विकारः

स्रवेद् दुष्टं तत्र रक्तं प्रभूतम् ।

पित्तस्रावः-हरिद्राभं पीतमुष्णं जलाभं

पित्तात्स्राव: संस्रवेत् सन्धिमध्यात् ॥७३॥

पर्वणी-ताम्रा तन्वी दाहशूलोपपन्ना

रक्ताज्ज्ञेया पर्वणी वृत्तशोथा ।

अलजी-जाता सन्धौ कृष्णशुक्लेऽलजी स्यात्

तस्मिन्नेव ख्यापिता पूर्वलिङ्गैः ॥ ७४ ॥

क्रिमिग्रन्थिः-क्रिमिग्रन्थिर्वर्त्मनः पक्ष्मणश्च

कण्डूं कुर्युः क्रिमयः सन्धिजाताः

नानारूपा वर्त्मशुक्लान्तसन्धौ

चरन्त्यन्तर्लोचनं दूषयन्तः ॥ ७५ ॥

वर्त्मरोगाः—

उत्संगपिडका-अभ्यन्तरमुखी ताम्रा बाह्यतो वर्त्मनश्च या

सोत्सङ्गोत्सङ्गपिडका सर्वजा स्थूलकण्डुरा ॥ ७६ ॥

कुंभिका-वर्त्मान्ते पिडका ध्माता भिद्यन्ते च स्रवन्ति च

कुम्भीकाबीजप्रतिमः कुम्भीकाः सन्निपातजाः ॥ ७७ ॥

पोथकी-स्राविण्यः कण्डुरा गुर्व्यो रक्तसर्षपसन्निभाः ।

रुजावत्यश्च पिडकाः पोथक्य इति कीर्तिताः ॥ ७८ ॥

वर्त्मशर्करा-पिडका या खरा स्थूला सूक्ष्माभिरभिसंवृता

वर्त्मस्था शर्करा नाम स रोगो वर्त्मदूषकः ॥ ७९ ॥

अर्शोवर्त्म:-एर्वारुबीजप्रतिमा: पिडका मन्दवेदना: ।
श्लक्ष्णा: खराश्च वर्त्मस्थास्तदर्शोवर्त्म कीर्त्यते ॥८०

शुष्कार्श:—

दीर्घाङ्कुर: खर: स्तब्धो दारुणोऽभ्यन्तरोद्भव: ।
व्याधिरेषोऽभिविख्यात: शुष्कार्शो नाम नामत:॥८१॥

अंजनिका-दाहतोदवती ताम्रा पिडका वर्त्मसंभवा ।
मृद्वी मन्दरुजा सूक्ष्मा ज्ञेया साऽञ्जननामिका ॥८२॥

बहुलवर्त्म-वर्त्मोपचीयते यस्य पिडकाभि: समन्तत: ।
सवर्णाभि: स्थिराभिश्च विद्याद्बहुलवर्त्म तत् ॥८३॥

वर्त्मबन्धक:-कण्डूमताऽल्पतोदेन वर्त्मशोथेन यो नर: ।
न स संछादयेदक्षि यत्रासौ वर्त्मबन्धक: ॥ ८४ ॥

क्लिष्टवर्त्म-मृद्वल्पवेदनं ताम्रं यद्वर्त्म सममेव च ।
अकस्माच्च भवेद्रक्तं क्लिष्टवर्त्मेति तद्विदु: ॥ ८५ ॥

वर्त्मकर्दम:-क्लिष्टं पुन: पित्तयुतं शोणितं विदहेद्यदा ।
तत: क्लिन्नत्वमापन्नमुच्यते वर्त्मकर्दम: ॥ ८६ ॥

श्याववर्त्म-यद्वर्त्म बाह्यतोऽन्तश्च श्यावं शूलं सवेदनम् ।
तदाहु: श्याववर्त्मेति वर्त्मरोगविशारदा: ॥ ८७ ॥

प्रक्लिन्नवर्त्म-अरुजं बाह्यत: शूनं वर्त्म यस्य नरस्य हि ।

प्रक्लिन्नवर्त्म तद्विद्यात् क्लिन्नमत्यर्थमन्ततः ॥८८॥

अक्लिन्नवर्त्म-यस्य धौतान्यधौतानि संबध्यन्ते पुनः पुनः ।
वर्त्मान्यपरिपक्वानि विद्यादक्लिन्नवर्त्म तत् ॥८९॥

वातहतवर्त्म-विमुक्तसन्धि निश्चेष्टं वर्त्म यस्य न मील्यते ।
एतद्वातहतं वर्त्म जानीयादक्षिचिन्तकः ॥ ९० ॥

वर्त्मार्बुदः-वर्त्मान्तरस्थं विषमं ग्रन्थिभूतमवेदनम् ।
आच क्षीतार्बुदमितिसरक्तमविलम्बितम् ॥९१॥

निमेषः-निमेषिणीः सिरा वायुः प्रविष्टो सन्धिसंश्रयाः ।
प्रचालयतिवर्त्मानि निमेषं नाम तद्विदुः ॥ ९२ ॥

शोणितार्शः-यः स्थितो वर्त्ममध्ये तु लोहितो मृदुरंकुरः
तद्रक्तजं शोणितार्शश्छिन्नं छिन्नं प्रवर्धते ॥ ९३ ॥

लगणः-अपाकी कठिनः स्थूलो 'ग्रन्थिर्वर्त्मभवोऽरुजः ।
लगणो नाम स व्याधिर्लिङ्गतः परिकीर्तितः ॥९४॥

बिसवर्त्म-त्रयो दोषाबहिः शोथं कुर्युश्छिद्राणि वर्त्मनोः
प्रस्रवन्त्यन्तरुदकं बिसवद्बिसवर्त्म तत् ॥ ९५ ॥

वर्त्मकुंचन-वाताद्या वर्त्मसंकोचं जनयन्ति मला यदा ।
तदा द्रष्टुं न शक्नोति कुञ्चनं नाम तद्विदुः ॥९६॥

पक्ष्मकोपः—

प्रचालितानि वातेन पक्ष्माण्यक्षि विशन्ति हि ।
घृष्यन्त्यक्षि मुहुस्तानि संरम्भं जनयन्ति च ॥९७॥
असिते सितभागे च मूलकोषात् पतन्त्यपि ।
पक्ष्मकोपः स विज्ञेयो व्याधिः परमदारुणः ॥९८॥

पक्ष्मशातः-वर्त्मपक्ष्माशयगतं पित्तं रोमाणि शातयेत् ।
कण्डू दाहं च कुरुते पक्ष्मशातं तमादिशेत् ॥९९॥

समस्तनेत्ररोगाणां संख्या—

(नव सन्ध्याश्रयास्तेषु वर्त्मजास्त्वेकविंशतिः ।
शुक्लभागे दशैकश्च चत्वारः कृष्णभागजाः ॥१००॥
सर्वाश्रयाः सप्तदश दृष्टिजा द्वादशैव तु ।
बाह्यजौ द्वौ समाख्यातौ रोगौ परमदारुणौ ॥१०१॥

इति श्रीमाधवकरविरचिते माधवनिदाने
नेत्ररोग-निदानं समाप्तम् ।

# अथ शिरोरोग-निदानम् ।

शिरोरोगसंख्या—

शिरोरोगास्तु जायन्ते वातपित्तकफैस्त्रिभिः ।
सन्निपातेन रक्तेन क्षयेण क्रिमिभिस्तथा ॥

सूर्यावर्तोऽनन्तवातार्धावभेदकशङ्खकैः ॥१॥

वातशिरोऽभितापः-यस्यानिमित्तं सिरसो रुजश्च
भवन्ति तीव्रा निशि चातिमात्रम् ।
बन्धोपतापैः प्रशमश्च यत्र
शिरोऽभितापः स समीरणेन ॥२॥

पैत्तिकशिरोभितापः-यस्योष्णमङ्गारचितं यथैव
भवेच्छिरो धूप्यति चाक्षिनासम् ।
शीतेन रात्रौ च भवेच्छमश्च
शिरोऽभितापः स तु पित्तकोपात् ॥३॥

कफशिरोऽभितापः-शिरो भवेद्यस्य कफोपदिग्धं
गुरु प्रतिष्ठब्धमथो हिमं च ।
शूनाक्षिकूटं वदनं च यस्य
शिरोऽभितापः स कफप्रकोपात् ॥४॥

त्रिदोषजशिरोऽभितापः-शिरोऽभितापे त्रितयप्रवृत्ते
सर्वाणि लिङ्गानि समुद्भवन्ति ।
रक्तात्मकः पित्तसमानलिङ्गः
स्पर्शासहत्वं शिरसो भवेच्च ॥५॥

क्षयजशिरोऽभितापः-असृग्वसाश्लेष्मसमीरणानां

शिरोगतानामिह संक्षयेण।
क्षयप्रवृत्तः शिरसोऽभितापः।
कष्टो भवेदुग्ररुजोऽतिमात्रम्।
संस्वेदनच्छर्दनधूमनस्यैरसृग्विमोक्षैश्च विवृद्धिमेति ॥६॥

क्रिमिजशिरोऽभितापः-निस्तुद्यते यस्य शिरोऽतिमात्रं
संभक्ष्यमाणं स्फुरतीव चान्तः।
घ्राणाच्च गच्छेत् सलिलं सपूयं
शिरोऽभितापः क्रिमिभिः स घोरः ॥७॥

सूर्यापवर्त्तः-सूर्योदयं या प्रति मन्दमन्द
मक्षिभ्रुवं रुक् समुपैति गाढा।
विवर्द्धते चांशुमता सहैव सूर्यापवृत्तौ विनिवर्तते च।
सर्वात्मकं कष्टतमं विकारं सूर्यापवर्तं तमुदाहरन्ति ॥८॥

अनन्तवातः-दोषास्तु दुष्टास्त्रय एव मन्यां
संपीड्य घाटासु रुजां सुतीव्राम्।
कुर्वन्ति योऽक्षिभ्रुवि शङ्खदेशे
स्थितिं करोत्याशु विशेषतस्तु ॥९॥
गण्डस्य पार्श्वे तु करोति कम्पं
हनुग्रहं लोचनजांश्च रोगान्।

अनन्तवातं तमुदाहरन्ति
दोषत्रयोत्थं शिरसो विकारम् ॥१०॥

अर्द्धावभेदः—रूक्षाशनात्यध्यशनप्राग्वातावश्यमैथुनैः ।
वेगसंधारणायासव्यायामैः कुपितोऽनिलः ॥११॥
केवलः सकफो वाऽर्धं गृहीत्वा शिरसो बली ।
मन्याभ्रूशङ्खकर्णाक्षिललाटार्धेऽतिवेदनाम् ॥१२॥
शस्त्रारणिनिभां कुर्यात् तीव्रां सोऽर्धावभेदकः ।
नयनं वाऽथवा श्रोत्रमतिवृद्धो विनाशयेत् ॥१३॥

शंखकः—रक्तपित्तानिला दुष्टाः शङ्खदेशे विमूर्च्छिताः ।
तीव्ररुग्दाहरागं हि शोथं कुर्वन्ति दारुणम् ॥१४॥
स शिरो विषवद्वेगी निरुन्ध्याशु गलं तथा ।
त्रिरात्राज्जीवितं हन्ति शङ्खको नामतः परम् ।
त्र्यहाज्जीवति भैषज्यं प्रत्याख्याय समाचरेत् ॥१५॥

इति श्रीमाधवकरविरचिते-माधवनिदाने शिरोरोग-निदानं समाप्तम् ।

---

# स्त्रीरोगाणां निदान प्रकरणम्-

## अथासृग्दरनिदानम् ।

### प्रदररोगस्य कारणं संख्या च

विरुद्धमद्याऽध्यशनादजीर्णाद्गर्भप्रपातादतिमैथुनाच्च ।
यानाध्वशोकादतिकर्षणाच्च
भाराभिघाताच्छयनाद्दिवा च ।
तं श्लेष्मपित्तानिलसन्निपातैश्चतुष्प्रकारं प्रदरं वदन्ति ॥१॥

सामान्यरूपम्—असृग्दरं भवेत् सर्वं साङ्गमर्दं सवेदनम् ।

### तस्यातिप्रवृत्तिरूपं—

तस्यातिवृत्तौ दौर्बल्यं भ्रमो मूर्च्छा मदस्तृषा ।
दाहः प्रलापः पाण्डुत्वं तन्द्रा रोगाश्च वातजाः ॥२॥

कफप्रदरम्—आमं सपिच्छाप्रतिमं सपाण्डु
पुलाकतोयप्रतिमं कफात्तु ।

पित्तप्रदरम्—सपीतनीलासितरक्तमुष्णं
पित्तार्तियुक्तं भृशवेगि पित्तात् ॥३॥

वातप्रदरम्—रूक्षारुणं फेनिलमल्पमल्पं
वातार्ति वातात् पिशितोदकाभम् ।

त्रिदोषप्रदरं तदसाध्यंच-सक्षौद्रसर्पिर्हरितालवर्णं
मज्जप्रकाशं कुणपं त्रिदोषात् ॥४॥
तं चाप्यसाध्यं प्रवदन्ति तज्ज्ञा
न तत्र कुर्वीत भिषक् चिकित्साम् ।

असाध्यरूपं—

शश्वत् स्रवन्तीमास्रावं तृष्णादाहज्वरान्विताम् ।
क्षीणरक्तां दुर्बलां च तामसाध्यां विनिर्दिशेत् ॥५॥

शुद्धार्तवरूपं—

मासान्निष्पिच्छदाहार्ति पञ्चरात्रानुबन्धि च ।
नैवातिबहुलात्यल्पमार्तवं शुद्धमादिशेत् ॥६॥
अन्यच्च शशासृक्प्रतिमं यच्च यद्वा लाक्षारसोपमम् ।
तदार्तवं प्रशंसन्ति यच्चाप्सु न विरज्यते ॥७॥
इति श्रीमाधवकरविरचिते-माधवनिदाने असृग्दर-
निदानं समाप्तम् ।

# अथ योनिव्यापन्निदानम् ।

योनिव्यापत्संख्या—

विंशतिर्व्यापदो योनौ निर्दिष्टा रोगसंग्रहे ।
तद्धेतवः-मिथ्याचारेण ताः स्त्रीणां प्रदुष्टेनार्तवेन च ॥१॥

जायन्ते बीजदोषाच्च दैवाच्च शृणु ताः पृथक् ।

पञ्चवातसम्बद्धा योनिव्यापदः—

उदावर्त्ता-सा फेनिलमुदावर्ता रजः कृच्छ्रेण मुञ्चति ॥२॥

वन्ध्या विप्लुता च—

वन्ध्यां नष्टार्तवां विद्याद्विप्लुतां नित्यवेदनाम् ।

परिप्लुता—

परिप्लुतायां भवति ग्राम्यधर्मेण रुग्भृशम् ॥३॥

वातला-वातला कर्कशा स्तब्धा शूलनिस्तोदपीडिता ।

चतसृष्वपि चाद्यासु भवन्त्यनिलवेदनाः ॥४॥

पञ्च पित्तसम्बद्धाः—

रक्तक्षया-सदाहं क्षीयते रक्तं यस्यां सा लोहितक्षया ।

वामिनी-सवातमुद्गिरेद्बीजं वामिनी रजसा युतम् ॥५॥

स्रंसिनी क्षोभिता च—

प्रस्रंसिनी स्रंसते च क्षोभिता दुष्प्रजायिनी ।

पुत्रघ्नी-स्थितं स्थितं हन्ति गर्भं पुत्रघ्नी रक्तसंक्षयात् ॥६॥

पित्तला-अत्यर्थं पित्तला योनिर्दाहपाकज्वरान्विता ।

चतसृष्वपि चाद्यासु पित्तलिङ्गोच्छ्रयो भवेत् ॥७॥

पञ्च कफसम्बद्धाः—

अत्यानन्दा-अत्यानन्दा न सन्तोषं ग्राम्यधर्मेण गच्छति ।

कर्णिका—

कर्णिन्यां कर्णिका योनौ श्लेष्मासृग्भ्यां प्रजायते ॥८॥
अचरणा-मैथुनेऽचरणा पूर्वं पुरुषादतिरिच्यते ।
अतिचरणा-बहुशश्चातिचरणा तयोर्वीजं न विन्दति ॥९॥

कफजा—

श्लेष्मलापिच्छला योनिः कण्डूग्रस्ताऽतिशीतला ।
चतसृष्वपि चाद्यासु श्लेष्मलिङ्गोच्छ्रयो भवेत् ॥१०॥

पञ्च त्रिदोषसम्बद्धाः—

अस्तनी षण्डी च—

अनार्तवाऽस्तनीषण्डी खरस्पर्शा च मैथुने ।
अण्डली-अतिकायगृहीतायास्तरुण्यास्त्वण्डली भवेत् ॥११॥

विवृता अतिसंवृता च—

विवृता च महायोनिः सूचीवक्त्राऽतिसंवृता ।
त्रिदोषजा-सर्वलिङ्गसमुत्थाना सर्वदोषप्रकोपजा ॥१२॥
चतसृष्वपि चाद्यासु सर्वलिङ्गोच्छ्रयो भवेत् ।
असाध्याः-पञ्चासाध्या भवन्तीह योनयः सर्वदोषजाः ॥१३॥

इति श्रीमाधवकरविरचिते माधवनिदाने योनि-
व्यापन्निदानं समाप्तम् ।

# अथ योनिकन्द-निदानम् ।

योनिकन्दहेतुः—

दिवास्वप्नादतिक्रोधाद्व्यायामदतिमैथुनात् ॥
क्षताच्च नखदन्ताद्यैर्वाताद्याः कुपिता यदा ॥१॥

कन्दस्वरूपं-पूयशोणितसंकाशं निकुचाकृतिसन्निभम् ।
जनयन्ति यदा योनौ नाम्ना कन्दः स योनिजः ॥२॥

वातिकः-रूक्षं विवर्णं स्फुटितं वातिकं तं विनिर्दिशेत् ।
पैत्तिकः-दाहरोगज्वरैर्युक्तं विद्यात् पित्तात्मकं तु तम् ॥३॥

कफजः-नीलपुष्पप्रतीकाशं कण्डूमन्तं कफात्मकम् ॥
सर्वजः-सर्वलिङ्गसमायुक्तं सन्निपातात्मकं विदुः ॥४॥

इति श्रीमाधवकरविरचिते माधवनिदाने योनिकन्द-
निदानं समाप्तम् ।

# अथ मूढगर्भ-निदानम् ।

गर्भपातहेतुः—

भयाभिघातात्तीक्ष्णोष्णपानाशननिषेवणात् ।
गर्भे पतति रक्तस्य सशूलं दर्शनं भवेत् ॥१॥

कालसम्बन्धेन स्राव-पातयोर्भेदः—

गर्भस्रावः-आचतुर्थात्ततो मासात् प्रस्रवेद्गर्भविद्रवः ।
गर्भपातः-ततः स्थिरशरीरस्य पातः पञ्चम-षष्ठयोः ॥२॥

मूढगर्भरूपं-गर्भोऽभिघातविषमाशनपीडनाद्यैः
पक्वं द्रुमादिव फलं पतति क्षणेन ।
मूढः करोति पवनः खलु मूढगर्भं
शूलं च योनिजठरादिषु मूत्रसङ्गम् ॥३॥

मूढगर्भदाः—( अष्टविधाः )

भुग्नोऽनिलेन विगुणेन ततः स गर्भः
संख्यामतीत्य बहुधा समुपैति योनिम् ।
द्वारं निरुध्य सिरसा जठरेण कश्चित्
कश्चिच्छरीरपरिवर्तितकुब्जदेहः ॥४॥

एकेन कश्चिदपरस्तु भुजद्वयेन
तिर्यग्गतो भवति कश्चिदवाङ्मुखोऽन्यः ।
पार्श्वापवृत्तगतिरेव तथैव कश्चि-
दित्यष्टधा गतिरियं ह्यपरा चतुर्धा ॥५॥

संकीलकः प्रतिखुरः परिघोऽथ बीज-
स्तेषूर्ध्वबाहुचरणैः शिरसा च योनिम् ।

संकीलकरूपं–सङ्गी च यो भवति कीलकवत्सकीलो
प्रतिखुररूपं–हस्यैः खुरैः प्रतिखुरं स हि कायसङ्गी ।
बीजकरूपं–गच्छेद्भुजद्वयशिराः स च बीजकाख्यो
परिघरूपं–योनौ स्थितः सपरिघः परिघेण तुल्यः ॥६॥
असाध्यरूपम्–अपविध्य शिरा या तु शीताङ्गी निरपत्रपा ।
नीलोद्गतसिरा हन्ति सा गर्भं स च तां तथा ॥७॥

अन्तर्मृतशिशुरूपं—

गर्भाऽस्पन्दनमावीनां प्रणाशः श्यावपाण्डुता ।
भवेदुच्छ्वासपूतित्वं शूनताऽन्तर्मृते शिशौ ॥८॥
गर्भमृत्युहेतवः–मानसागन्तुभिर्मातुरुपतापैः प्रपीडितः ।
गर्भो व्यापद्यते कुक्षौ व्याधिभिश्च निपीडितः ॥९॥
असाध्यरूपं-योनिसंवरणं सङ्गः कुक्षौ मक्कल्ल एव च ।
हन्युः स्त्रियं मूढगर्भा यथोक्ताश्चाप्युपद्रवाः ॥१०॥
इति श्रीमाधवकरविरचिते माधवनिदाने
मूढगर्भ-निदानं समाप्तम् ॥

——

# अथ सूतिकारोगनिदानम् ।

### शूतिकारोगरूपम्—

अङ्गमर्दो ज्वरः कम्पः पिपासा गुरुगात्रता ।
शोथः शूलातिसारौ च सूतिकारोगलक्षणम् ॥१॥

### सूतिकारोगहेतुः—

मिथ्योपचारात् संक्लेशाद्विषमाजीर्णभोजनात् ।
सूतिकायाश्च ये रोगा जायन्ते दारुणास्तुते ॥२॥
सूतिकारोगाः-ज्वरातीसारशोथाश्च शूलानाहबलक्षयाः ।
तन्द्रारुचिप्रसेकाद्याः कफवातामयोद्भवाः ॥ ३ ॥

### कष्टसाध्याः—

कृच्छ्रसाध्या हि ते रोगाः क्षीणमांसबलाग्नितः ।
ते सर्वे सूतिकानाम्ना रोगास्ते चाप्युपद्रवाः ॥४॥

इति श्रीमाधवकरविरचिते माधवनिदाने
सूतिकारोग-निदानं समाप्तम ।

# अथ स्तनरोगनिदानम् ।

सम्प्राप्तिः—

सक्षीरौ वाऽप्यदुग्धौ वा प्राप्य दोषः स्तनौ स्त्रियाः ।
प्रदूष्य मांसरुधिरं स्तनरोगाय कल्पते ॥ १ ॥

विद्रधिसादृश्यं—

पञ्चानामपि तेषां हि रक्तजं विद्रधिं विना ।
लक्षणानि समानानि बाह्यविद्रधिलक्षणैः ॥ २ ॥

इति श्रीमाधवकरविरचिते-माधवनिदाने
स्तनरोग-निदानं समाप्तम् ।

---

# अथ स्तन्यदुष्टिनिदानम् ।

( स्तन्यं दुग्धं, तद्दुष्टिः )—

दुग्धदुष्टिहेतुः-गुरुभिर्विविधैरन्नैर्दुष्टैर्दोषैः प्रदूषितम् ।

तच्च बालरोगहेतुः—

क्षीरं मातुः कुमारस्य नानारोगाय कल्पते ॥ १ ॥
वातदुष्टदुग्धं-कषायं सलिलप्लावि स्तन्यं मारुतदूषितम् ।
पित्तदुष्टदुग्धं-कट्वम्ललवणं पीतराजीमत् पित्तसंज्ञितम् ॥२॥
कफदुष्टदुग्धं-कफदुष्टं घनं तोये निमज्जति सपिच्छलम् ।

द्वन्द्वजं सर्वजं—

द्विलिङ्गं द्वन्द्वजं विद्यात् सर्वलिङ्गं त्रिदोषजम् ॥३॥

शुद्धदुग्धरूपम्-अदुष्टं चाम्बुनिक्षिप्तमेकीभवति पाण्डुरम् ।
मधुरं चाविवर्णं च प्रसन्नं तत् प्रशस्यते ॥४॥

इति श्रीमाधवकरविरचिते-माधवनिदाने
स्तन्य-दुष्टि निदानं समाप्तम् ।

## अथ बालरोगनिदानम् ।

वातरोगिशिशुः—

वातदुष्टं शिशुः स्तन्यं पिबन् वातगदातुरः ।
क्षामस्वरः कृशाङ्गः स्याद्बद्धविण्मूत्रमारुतः ॥ १ ॥

पित्तरोगिशिशुः—

स्विन्नो भिन्नमलो बालः कामलापित्तरोगवान् ।
तृष्णालुरुष्णसर्वाङ्गः पित्तदुष्टं पयः पिबन् ॥ २ ॥

कफरोगिशिशुः—

कफदुष्टं पिबन् क्षीरं लालालुः श्लेष्मरोगवान् ।
निद्रान्वितो जडः शूनवक्त्राक्षश्छर्दनः शिशुः ॥३॥

द्वन्द्वत्रिदोषजरूपं—

द्वन्द्वजे द्वन्द्वजं रूपं सर्वजे सर्वलक्षणम् ।

शिशुपीडाविवेकः-

शिशोस्तीव्रामतीव्रां च रोदनाल्लक्षयेद्रुजम् ॥४॥
स यं स्पृशेद् भृशं देशं यत्र च स्पर्शनाऽक्षमः ।
तत्र विद्याद्रुजं, मूर्ध्नि रुजं चाक्षिनिमीलनात् ॥५॥
कोष्ठे विबन्धवमथुस्तनदंशान्त्रकूजनैः ।
आध्मानपृष्ठनमनजठरोन्नमनैरपि, ॥ ६ ॥
वस्तौ गुह्ये च विण्मूत्रसंगत्रासदिगीक्षणैः, ।
स्रोतांस्यङ्गानि सन्धींश्च पश्येद्यत्नान्मुहुर्मुहुः ॥

कुकूणकरोगः-कुकूणकः क्षीरदोषाच्छिशूनामेववर्त्मनि ।
जायते तेन तन्नेत्रं कण्डूरं च स्रवेन्मुहुः ॥ ८ ॥
शिशुः कुर्याल्ललाटाक्षिकूटनासात्रघर्षणम् ।
शक्तो नार्कप्रभां द्रष्टुं न वर्त्मोन्मीलनक्षमः ॥ ९ ॥

पारिगर्भिकः—( परिभवो वा )

मातुः कुमारो गर्भिण्याः स्तन्यं प्रायः पिबन्नपि ।
कासाग्निसादवमथुतन्द्राकार्श्यारुचिभ्रमैः ॥१०॥
युज्यते कोष्ठवृद्ध्या च तमाहुः पारिगर्भिकम् ।
रोगं परिभवाख्यं च युञ्ज्यात्तत्राग्निदीपनम् ॥११॥

तालुकण्टकः—

तालुमांसे कफः क्रुद्धः कुरुते तालुकण्टकम् ।

तेन तालुप्रदेशस्य निम्नता मूर्ध्नि जायते ॥ १२ ॥
तालुपातः स्तनद्वेषः कृच्छ्रात् पानं शकृद् द्रवम् ।
तृडक्षिकण्ठास्यरुजा ग्रीवादुर्धरता वमिः ॥१३॥

महापद्मविसर्पः—

विसर्पस्तु शिशोः प्राणनाशनो वस्तिशीर्षजः ।
पद्मवर्णो महापद्मनामा दोषत्रयोद्भवः ॥ १४ ॥
शङ्खाभ्यां हृदयं याति हृदयाद्वा गुदं व्रजेत् ।
शेषा रोगाः-क्षुद्ररोगे च कथिते त्वजगल्ल्यहिपूतने ॥१५॥
ज्वराद्या व्याधयःसर्वे महतां ये पुरेरिताः ।
बालदेहेऽपि ते तद्वद्विज्ञेयाः कुशलैः सदा ॥ १६ ॥

बालानाँ ग्रहसम्भूतरोगानाह
ग्रहजुष्टसामान्यरूपं—

क्षणादुद्विजते बालः क्षणात्त्रस्यति रोदिति ।
नखैर्दन्तैर्दारयतिधात्रीमात्मानमेव वा ॥१७॥
ऊर्ध्वं निरीक्षते दन्तान् खादेत् कूजति जृम्भते ।
भ्रुवौ क्षिपति दन्तोष्ठं फेनं वमति चासकृत् ॥१८॥
क्षामोऽति निशि जागर्ति शूनाक्षो भिन्नविट्स्वरः ।
मांसशोणितगन्धिश्च न चाश्नाति यथा पुरा ॥१६॥

सामान्यं ग्रहजुष्टानां लक्षणं समुदाहृतम् ।

स्कन्दग्रहरूपं—

एकनेत्रस्य गात्रस्य स्रावः स्पन्दनकम्पनम् ॥ २० ॥
ऊर्ध्वं दृष्ट्या निरीक्षेत्र वक्रास्यो रक्तगन्धिकः ।
दन्तान् खादति वित्रस्तः स्तन्यं नैवाभिनन्दति ॥२१॥
स्कन्दग्रहगृहीतानां रोदनं चाल्पमेव च ।

स्कन्दापस्माररूप—

नष्टसंज्ञो वमेत् फेनं संज्ञावानतिरोदिति ।
पूयशोणितगन्धित्वं स्कन्दापस्मारलक्षणम् ॥ २२ ॥

शकुनिग्रहरूपं-स्रस्ताङ्गो भयचकितो विहङ्गगन्धिः
सास्रावव्रणपरिपीडतः समन्तात् ।
स्फोटैश्च प्रचिततनुः सदाहपाकै-
र्विज्ञेयोभवति शिशुः क्षतः शकुन्या ॥ २३ ॥

रेवतीग्रहरूपं—

व्रणः स्फोटैश्चितं गात्रं पङ्कगन्धं स्रवेदसृक् ।
भिन्नवर्चा ज्वरी दाही रेवतीग्रहलक्षणम् ॥ २४ ॥

पूतनाग्रहरूपं—

अतीसारो ज्वरस्तृष्णा तिर्यक्प्रेक्षणरोदनम् ।
नष्टनिद्रस्तथोद्विग्नो ग्रस्तः पूतनया शिशुः ॥२५॥

अंधपूतनारूपं—

छर्दिः कासो ज्वरस्तृष्णा वसागन्धोऽतिरोदनम् ।
स्तन्यद्वेषोऽतिसारश्च अन्धपूतनया भवेत् ॥ २६ ॥

शीतपूतनारूपं—

वेपते कासते क्षीणो नेत्ररोगो विगन्धिता ।
छर्द्यतीसारयुक्तश्च शीतपूतनया शिशुः ॥ २७ ॥

मुखमंडतिकारूपं-प्रसन्नवर्णवदनः सिराभिरभिसंवृतः ।
मूत्रगन्धी च बह्वाशी मुखमण्डिकयाभवेत् ॥२८ ॥

नैममेयरूपं-छर्दिस्प(स्य) न्दनकण्ठास्यशोषमूर्च्छाविगन्धिता
ऊर्ध्वं पश्येद्दशेद्दन्तान् नैगमेयग्रहं वदेत् ॥ २९ ॥

इति श्रीमाधवकरविरचिते-माधवनिदाने
बालरोग-निदानं समाप्तम् ॥

---

# अथ विष निदानम् ।

द्विविधविषं-स्थावरं जङ्गमं चैव द्विविधं विषमुच्यते ।
मूलाद्यात्मकमाद्यं स्यात् परं सर्पादिसंभवम् ॥ १ ॥

स्थावरलक्षणं-स्थावरं च ज्वरं हिक्कां दन्तहर्षगलग्रहम् ।

फेनच्छर्द्यरुचिश्वासं मूर्च्छां च कुरुते भृषम् ॥ २ ॥
जंगमलक्षणं-निद्रां तन्द्रां क्लमं दाहमपाकं लोमहर्षणम् ।
शोथं चैवातिसारं च जङ्गमं कुरुते विषम् ॥ ३ ॥

पूर्व स्थावरविषस्य प्रकरणम्—

विषदातृरूपं-इङ्गितज्ञो मनुष्याणां वाक्चेष्टामुखवैकृतैः ।
जानीयाद्विष दातारमेभिर्लिङ्गैश्च बुद्धिमान् ॥ ४ ॥
न ददात्युत्तरं पृष्टो विवक्षुर्मोहमेति च ।
अपार्थं बहु संकीर्णं भाषते चापि मूढवत् ॥ ५ ॥
हसत्यकस्मात् स्फोटतत्य ङ्गलीर्विलिखेन्महीम् ॥
वेपथुश्चास्य भवति त्रस्तश्चान्योन्यमीक्षते ॥ ६ ॥
विवर्णवक्त्रोध्यानश्च नखैः किंचिच्छिनत्त्यपि
आलभेतासनंदीनः करेण च शिरोरुहम् ॥ ७ ॥
वर्तते विपरीतं च विषदाता विचेतनः ॥
मूलविषरूपं-उद्वेष्टनं मूलविषैः प्रलापो मोह एव च ॥ ८ ॥
पत्रविषरूपं-जृम्भणं वेपनं श्वासो मोहः पत्रविषेण तु ।
फलविषरूपं-मुष्कशोथः फलविषैर्दाहोऽन्नद्वेष एव च ॥९॥
पुष्पविषरूपं-भवेत् पुष्पविषैश्छर्दिराध्मानं श्वास एव च ।

त्वक्सारनिर्यासविषरूपं—

त्वक्सारनिर्यासविषैरुपयुक्तैर्भवन्ति हि ॥ १० ॥
आस्यदौर्गन्ध्यपारुष्यशिरोरुक्कफसंस्रवाः ।
क्षीरविषरूपं-फेनागमः क्षीरविषैर्विड्भेदो गुरुगात्रता ॥११॥
धातुविषरूपं-हृत्पीडनं धातुविषैर्मूर्च्छा दाहश्च तालुनि ।
प्रायेण कालघातीनि विषाण्येतानि निर्दिशेत् ॥१२॥
विषदिग्धशस्त्रहतरूपं-सद्यः क्षतं पच्यते यस्य जन्तोः
स्रवेद्रक्तं पच्यते चाप्यभीक्ष्णम् ।
कृष्णीभूतं क्लिन्नमत्यर्थपूति
क्षतान्मांसं शीर्यते चापि यस्य ॥ १३ ॥
तृष्णा मूर्च्छा ज्वरदाहौ च यस्य
दिग्धाहतं तं पुरुषं व्यवस्येत् ।
व्रणगतविषरूपं-लिङ्गान्येतान्येव कुर्यादमित्रै-
र्व्रणे विषं यस्य दत्तं प्रमादात् ॥ १४ ॥
विषपीतरूपं-सपीतं गृहधूमाभं पुरीषं योऽतिसार्यते ।
फेनमुद्वमते चापि विषपीतं तमादिशेत् ॥ १५ ॥

अथ जंगमविषप्रकरणम्—

वातपित्तकफात्मानो भोगि मण्डलि राजिलाः ।

यथाक्रमं समाख्याता द्व्यन्तरा द्वन्द्वरूपिणः ॥१६॥
दंशो भोगिकृतः कृष्णः सर्ववातविकारकृत् ।
पीतो मण्डलिजः शोथो मृदुः पित्तविकारवान् ॥१७॥
राजिलोत्थो भवेद्दंशः स्थिरशोथश्च पिच्छिलः ।
पाण्डुः स्निग्धोऽतिसान्द्रासृक् सर्वश्लेष्मविकारकृत ॥१८॥

असाध्याः सर्पदष्टाः—

अश्वत्थदेवायतनश्मशानवल्मीकसन्ध्यासु चतुष्पथेषु
याम्ये चदष्टा परिवर्जनीया
ऋक्षे सिरामर्मसु ये च दष्टाः ॥ १६ ॥
दर्वीकराणां विषमाशुघाति
सर्वाणि चोष्णे द्विगुणीभवन्ति ।
अजीर्णपित्तातपपीडितेषु बालेषु वृद्धेषु बुभुक्षितेषु ॥२० ॥
क्षीणक्षतेमेहिनि कुष्ठयुक्तेरूक्षेऽबलेगर्भवतीषु चापि ।
शस्त्रक्षते यस्य न रक्तेमति
राज्यो लताभिश्च न संभवन्ति ॥ २१ ॥
शीताभिरद्भिश्च न रोमहर्षो
विषाभिभूतं परिवर्जयेत्तम् ।
जिह्मं मुखं यस्य च केशशातो

नासावसादाश्च सकण्ठभङ्गः ॥ २२ ॥
कृष्णः सरक्तः श्वयथुश्च दंशे
हन्वोः स्थिरत्वं च विवर्जनीयः ।
वर्तिर्घना यस्य निरेति वक्त्रा-
द्रक्तं स्रवेदूर्ध्वमधश्च यस्य ॥ २३ ॥
दंष्ट्रानिपाताः श्चतुरश्च यस्य
तं चापि वैद्यः परिवर्जयेच्च ।
उन्मत्तमत्यर्थमुपद्रुतं वा हीनस्वरं वाऽप्यथवा विवर्णम्
सारिष्टमत्यर्थमवेगिनं च ज्ञात्वानरं कर्म न तत्र कुर्यात ।

अथ दूषीविषप्रकरणम्—

जीर्णं विषघ्नौषधिभिर्हतं वा
दावाग्निवातातपशोषितं वा ॥ २५ ॥
स्वभावतो वा गुणविप्रहीनं
विषं हि दूषीविषतामुपैति ।
वीर्याल्पभावान्न निपातयेत्तत्
कफान्वितं वर्षगणानुबन्धि ॥ २६ ॥
तेनार्दितो भिन्नपुरीषवर्णो
वैगन्ध्यवैरस्ययुतः पिपासी ।

मूर्च्छां भ्रमं गद्गद्वाग्वमिं च।
विचेष्टमानोऽरतिमाप्नुयाद्वा ॥ २७ ॥
आमाशयस्थे कफवातरोगी
पक्वाशयस्थेऽनिलपित्तरोगी।
भवेत्समुद् ध्वस्तशिरोरुहाङ्गो
विलूनपक्षस्तु यथा विहङ्गः ॥ २८ ॥
स्थितं रसादिष्वथवा यथोक्तान्
करोति धातुप्रभवान् विकारान्।
कोपं च शीतानिलदुर्दिनेषु
यात्याशु, पूर्वं शृणु तस्य रूपम् ॥ २६ ॥
निद्रा गुरुत्वं च विजृम्भणं च
विश्लेषहर्षावथवाऽङ्गमर्दम्।
ततः करोत्यन्नमदाविपाका-
वरोचकं मण्डलकोठजन्म ॥ ३० ॥
मांसक्षयं पादकरप्रशोथं
मूर्च्छां तथा छर्दिमथातिसारम्।
दूषीविषंश्वासतृषाज्वरांश्च।
कुर्यात्प्रवृद्धिं जठरस्यचापि ॥ ३१ ॥

उन्मादमन्यज्जनयेत्तथाऽन्य-
दानाहमन्यत्क्षपयेच्च शुक्रम् ।
गाद्‌गद्यमन्यज्जनयेच्च कुष्ठं
तांस्तान्विकारांश्च बहुप्रकारान् ॥ ३२ ॥

दूषितं देशकालान्नदिवास्वप्नैरभीक्ष्णशः ।
यस्मात् संदूषयेद्धातून् तस्माद्दूषीविषं स्मृतम् ॥३३॥
साध्यमात्मवतः सद्यो याप्यं संवत्सरोत्थितम् ।
दूषीविषमसाध्यंस्यात् क्षीणस्याऽहितसेविनः ॥३४॥

अथ गरप्रकरणम्—

सौभाग्यार्थं स्त्रियः स्वेदंरजोनानाङ्गजान् मलान् ।
शत्रुप्रयुक्तांश्च गरान् प्रयच्छन्त्यन्नमिश्रितान् ॥३५॥
तैः स्यात् पाण्डुः कृशोऽल्पाग्निर्गरश्चास्योपजायते ।
मर्मप्रधमनाध्मानं हस्तयोः शोथलक्षणम् ॥ ३६ ॥
जठरं ग्रहणीदोषो यक्ष्मा गुल्मः क्षयो ज्वरः ।
एवंविधस्य चान्यस्य व्याधेर्लिङ्गानि दर्शयेत् ॥३७॥

अथ लूतादिविषप्रकरणम्—

जन्महेतुः—यस्माल्लूनं तृणं प्राप्ता मुनेः प्रस्वेदविन्दवः ।
तस्माल्लूतास्तु भाष्यन्ते संख्यया ताश्च षोडश ॥३८॥

लूतादंशरूपं ( सामान्यं )—

ताभिर्दष्टे दंशकोथः प्रवृत्तिः क्षतजस्य च ।
ज्वरो दाहोऽतिसारश्च गदाः स्युश्च त्रिदोषजाः॥३९
पिडका विविधाकारा मण्डलानि महान्ति च ।
शोथा महान्तो मृदवो रक्ताः श्यावाश्चलास्तथा॥४०
सामान्यं सर्वलूतानामेतद्दंशस्य लक्षणम् ।

दूषीविषलूतानां दंशलक्षणम्—

दंश मध्येतु यत् कृष्णं श्यावं वा जालकाचितम॥४१
ऊर्ध्वाकृति भृशं पाकं क्लेदशोथज्वरान्वितम् ।
दूषीविषाभिर्लूताभिस्तद्दष्टमिति निर्दिशेत् ॥ ४२ ॥

सर्वलूतानां दंशरूपं—

सर्पाणामेवविण्मूत्र शबकोथसमुद्भवाः
दूषीविषाः प्राणहराइति संक्षेपतो मताः ॥
शोथः श्वेताः सिता रक्ताः पीता वा पिडका ज्वरः
प्राणान्तिकाश्च जायन्तेश्वास हिक्काशिरोग्रहाः ॥४३

मूषिकादंशरूपं—

अस्रदंशाच्छोणितं पाण्डु मण्डलानि ज्वरोऽरुचिः ।
लोमहर्षश्च दाहश्चाऽऽप्याखुदूषीविषार्दिते ॥४४॥

असाध्यमूषिकरूपं—

मूर्च्छाङ्गशोथवैवर्ण्यक्लेदशब्दाऽश्रुतिज्वराः ।
शिरोगुरुत्वं लालासृक्छर्दिश्चासाध्यमूषिकैः ॥४५॥

कृकलासदंशरूपं—

कार्ष्ण्यं श्यावत्वमथवा नानावर्णत्वमेव वा ।
मोहोऽथवर्चसोभेदो दष्टे स्यात् कृकलासकैः ॥४६॥

वृश्चिकदंशरूपं—

दहत्यग्निरिवादौ च भिनत्तीवोर्ध्वमाशु च ।
वृश्चिकस्य विषं याति दंशे पश्चात्तु तिष्ठति ॥४७॥

असाध्यरूपं—दष्टोऽसाध्यश्च हृद्घ्राणरसनोपहतो नरः ।
मांसैः पतद्भिरत्यर्थं वेदनार्तो जहात्यसून् ॥ ४८ ॥

कणभदंशरूपं—विसर्पः श्वयथुः शूलं ज्वरश्छर्दिरथापि च ।
लक्षणं कणभैर्दष्टे दंशश्चैवावसीदति ॥ ४९ ॥

उच्चिटिंगदंशः—

हृष्टलोमोच्चिटिङ्गेन स्तब्धलिङ्गो भृशार्तिमान् ।
दष्टः शीतोदकेनेव सिक्तान्यङ्गानि मन्यते ॥५०॥

मण्डूकदंशः—एकदंष्ट्रार्दितः शूनः सरुजः पीतकः सतृट् ।
छर्दिर्निद्रा च सविषैर्मण्डूकैर्दष्टलक्षणम् ॥ ५१ ॥

मत्स्यदंशः—मत्स्यास्तु सविषाः कुर्युर्दाहं शोथं रुजं तथा।

जलौकोदंशः—

कण्डूं शोथं ज्वरं मूर्च्छां सविषास्तु जलौकसः॥५२

गृहगोधिकादंशः—

विदाहं श्वयथुं तोदं स्वेदं च गृहगोधिका।

शतपदीदंशः—

दंशे स्वेदं रुजं दाहं कुर्याच्छतपदीविषम्॥ ५३ ॥

मशकदंशः—

कण्डूमान् मशकैरीषच्छोथः स्यान्मन्दवेदनः।

तदसाध्यदंशः—

असाध्यकीटसदृशमसाध्यं मशकक्षतम्॥ ५४ ॥

मक्षिकादंशः—

सद्यः प्रस्राविणी श्यावा दाहमूर्च्छाज्वरान्विता।

स्थगिकाऽसाध्या—

पिडका मक्षिकादंशे तासां तु स्थगिकाऽसुहृत्॥५५॥

चतुष्पद्द्विपदंशः—

चतुष्पाद्भिर्द्विपद्भिश्च नखदन्तविषं च यत्।
शूयते पच्यते वापि स्रवति ज्वरयत्यपि॥ ५६ ॥

श्व शृगाल तरक्ष्वर्थ व्याघ्रादीनां यदाऽनिलः ।
श्लेष्म प्रदुष्टो मुष्णाति संज्ञां संज्ञा वहा श्रितः ॥५७॥
तदा प्रस्रस्तलाङ्गूल हनुस्कन्धोऽतिलालवान् ।
अव्यक्त बधिरान्धश्च सोऽन्योन्यमभिधावति ॥५८॥
प्रमूढोऽन्यतम स्त्वेषां खादन्वि परिधावति ।
तेनोन्मत्तेन दष्टस्य दंष्ट्रिणा सविषेणतु ॥ ५९ ॥
सुप्तता जायतेदंशे कृष्णंचाति स्रवत्य सृक् ।
दिग्ध विद्धस्य लिङ्गेन प्राय शश्चोपलक्षितः ॥६०॥
येन चापि भवेद्दष्टस्तस्य चेष्टां रुतं नरः ।
बहुशः प्रतिकुर्वाणः क्रियाहीनो विपश्यति ॥ ६१ ॥
दंष्ट्रिणा येन दष्टश्च तद्रूपंयस्तु पश्यति ॥
अप्सु चादर्श-बिम्बेवातस्य तद्रिष्टमादिशेत् ॥ ६२ ॥
त्रस्यत्यकस्माद्योऽभीक्ष्णं दृष्ट्वा स्पृष्ट्वाऽपि वा जलम्
जलत्रासं तु तं विद्याद्रिष्टं तदपिकीर्तितम् ॥ ६३ ॥
अदष्टो वा जलत्रासी न कथंचन सिद्ध्यति ।
प्रसुप्तो वोत्थितो वाऽपि स्वस्थस्त्रस्तो न सिद्ध्यति
नर्विषपुरुषलक्षणम्—प्रशान्तदोषं प्रकृतिस्थधातु-

मन्नाभिकामं सममूत्रविट्कम् ।
प्रसन्नवर्णेन्द्रियचित्तचेष्टं
वैद्योऽवगच्छेदविषं मनुष्यम् ॥ ६५ ॥

इत्युत्तरार्द्धम् ।

इति श्रीमाधवकरविरचिते-माधवनिदाने
विष-निदानं समाप्तम् ।

---

# अथ विषयानुक्रमणिका ।

ज्वरोऽतिसारो ग्रहणी चार्शोऽजीर्णं विसूचिका ।
अलसश्च विलम्बी च क्रिमिरुक्पाण्डुकामलाः ॥१॥
हलीमकं रक्तपित्तं राजयक्ष्मा उरःक्षतम् ।
कासो हिक्का सह श्वासैः स्वरभेदस्त्वरोचकः ॥२॥
छर्दिस्तृष्णा च मूर्च्छाद्या रोगाः पानात्ययादयः ।
दाहोन्मादावपस्मारः कथितोऽथानिलामयः ॥३॥
वातरक्तमूरुस्तम्भ आमवातोऽथ शूलरुक् ।
पक्तिजं शूलमानाह उदावर्तोऽथ गुल्मरुक् ॥ ४ ॥

हृद्रोगो मूत्रकृच्छ्रं च मूत्राघातस्तथाऽश्मरी ।
प्रमेहो मधुमेहश्च पिडकाश्च प्रमेहजाः ॥ ५ ॥
मेदस्तथोदरं शोथो वृद्धिश्च गलगण्डकः ।
गण्डमालाऽपची ग्रन्थिरर्बुदः श्लीपदं तथा ॥ ६ ॥
विद्रधिर्व्रणशोथश्च द्वौ व्रणौ भग्ननाडिके ।
भगन्दरोपदंशौ च शूकदोषस्त्वगामयः ॥ ७ ॥
शीतपित्तमुदर्दश्च कोठश्चैवाम्लपित्तकम् ।
विसर्पश्च सविस्फोटः सरोमान्त्यो मसूरिका ॥८॥
क्षुद्राऽऽस्यकर्णनासाक्षिशिरः स्त्रीबालकामयाः ।
विषं चेत्ययमुद्दिष्टो रुग्विनिश्चयसंग्रहः ॥ ९ ॥
सुभाषितं यत्र यदस्ति किञ्चि-
त्तत्सर्वमेकीकृतमत्र यत्नात् ।
विनिश्चये सर्वरुजां नराणां
श्रीमाधवेनेन्दुकरात्मजेन ॥ १० ॥
यत्कृतं सुकृतं किञ्चित्कृत्वैवं रुग्विनिश्चयम् ।
मुञ्चन्तु जन्तवस्तेन नित्यमातङ्कसन्ततिम् ॥११॥

इति श्रीमाधवकरविरचिते माधव निदानम्

समाप्तम् ॥

## अथ माधव निदानस्य

# परिशिष्टम्

## अथ स्नायुकनिदानम् ।

शाखासु कुपितो दोषः शोथं कृत्वा विसर्पवत् ।
भिनत्ति तत्क्षते तत्र सोष्मस्नायुं विशोष्य च ॥१॥
कुर्यात्तन्तुनिभं जीवं वृत्तं श्वेतद्युतिं बहिः ।
शनैः शनैः क्षताद्याति छेदात्कोपमुपैति च ॥ २ ॥
तत्पाताच्छोथशान्तिः स्य त्पुनः स्थानान्तरे भवेत् ।
स स्नायुकेति विख्यातः क्रियोक्ताऽत्र विसर्पवत् ॥ ३ ॥
बाह्वार्यदि प्रमादेन त्रुट्यते जङ्घयोरपि ।
सङ्कोचं खञ्जतां चैव छिन्नतन्तुः करोत्यसौ ॥ ४ ॥

वातेन श्यावरूक्षः सरुगथ
दहनान्नीलपीतः सदाहो-
ऽथ श्वतः श्लेष्मणा स्यात्पृथु-
गरिमयुतोऽथ द्विदोषो द्विलिङ्गी ॥५॥

रक्तेनारक्तकान्तिः समधिकदहनोऽथाखिलैः सर्वलिङ्गो रोगोऽसावष्टधेत्थं मुनिभिरभिहितः स्नायुकस्तन्तुकीट

इति स्नायुकनिदानं समाप्तम् ।

## अथ फिरङ्गरोगनिदानम् ।

फिरङ्गसंज्ञके देशे बाहुल्येनैव यद्भवेत् ।
तस्मात्फिरङ्ग इत्युक्तो व्याधिर्व्याधिविशारदैः ॥१॥
गन्धरोमः फिरङ्गोऽयं जायते देहिनां ध्रुवम् ।
फिरङ्गिनोऽङ्गसंसर्गात्फिरङ्गिण्याः प्रसङ्गतः ॥२॥
व्याधिरागन्तुजो ह्येष दोषाणामत्र संक्रमः ।
भवेत्तल्लक्षयेत्तेषां लक्षणैर्भिषजां वरः ॥३॥
फिरङ्गस्त्रिविधो ज्ञेयो बाह्य आभ्यन्तरस्तथा ।
बहिरन्तर्भवश्चापि तेषां लिंगानि च ब्रुवे ॥४॥
तत्र बाह्यः फिरङ्गः स्याद्विस्फोटसदृशोऽल्परुक् ।
स्फुटितो व्रणवद्वैद्यैः सुखसाध्योऽपि सोमतः ॥५॥
सन्धिष्वाभ्यन्तरः स स्यादामवात इव व्यथाम् ।

शोफं च जनयेदेष कष्टसाध्यो बुधैः स्मृतः ॥६॥
कार्श्यं बलक्षयो नासाभङ्गो वह्नेश्च मन्दता ।
अस्थिशोषोऽस्थिवक्रत्वं फिरङ्गोपद्रवा अमी ॥७॥
बहिर्भवो भवेत्साध्यो नवीनो निरुद्रवः ।
आभ्यन्तरस्तु कष्टेन साध्यः स्यादयमामयः ॥८॥
बहिरन्तर्भवश्चापि क्षीणस्योपद्रवैर्युतः ।
व्याप्तो व्याधिरसाध्योऽयमित्याहुर्मुनयः पुरा ॥९॥

इति फिरङ्गरोगनिदानं समाप्तम् ।

## अथ सोमरोगनिदानम् ।

स्त्रीणामतिप्रसङ्गेन शोकाच्चाविश्रमादपि ।
अतिसारकयोगाद्वा गरयोगात्तथैव च ॥१॥
आपः सर्वशरीरस्थाः क्षुभ्यन्ति प्रस्रवन्ति च ।
तस्यास्ताः प्रच्युताः स्थानान्मूत्रमार्गं व्रजन्ति हि ॥२॥
प्रसन्ना विमलाः शीता निर्गन्धा नीरुजः सिताः ।
स्रवन्ति चातिमात्रं ताः सा न शक्नोति दुर्बला ॥

वेगं धारयितुं तासां न विदन्ति सुखं कचित् ।
शिरः शिथिलता तस्या मुखं तालु च शुष्यति ॥४॥
मूर्च्छा जृम्भा प्रलापश्च त्वग्रूक्षा चातिमात्रतः ।
भक्ष्यैर्भोज्यैश्च पेयैश्च न तृप्तिं लभते कचित् ॥५॥
सन्धारणाच्छरीरस्य ता आपः क्षोभसंज्ञिताः ।
ततः सोमक्षयात् स्त्रीणां सोमरोग इति स्मृतः ॥६॥

इति सोमरोगनिदानं समाप्तम् ।

## अथ शीतलानिदानम् ।

देव्या शीतलयाऽऽक्रान्ता मसूर्यः शीतला बहिः ॥
ज्वरयेयुर्यथा भूताधिष्ठितो विषमज्वरः ॥१॥
ताश्च सप्तविधाः ख्यातास्तासां भेदान्प्रचक्ष्महे ।
ज्वरपूर्वा बृहत्स्फोटैः शीतला बृहती भवेत् ॥२॥
सप्ताहान्निः सरत्येव सप्ताहात्पूर्णतां व्रजेत् ।
ततस्तृतीये सप्ताहे शुष्यति स्खलति स्वयम् ॥३॥
वातश्लेष्मसमुद्भूता कोद्रवा कोद्रवाकृतिः ।

तां कश्चित्प्राह पक्वेति सा तु पाकं न गच्छति ॥४॥
जलशूकवदङ्गानि सा विध्यति विशेषतः ॥
सप्ताहाद्वा दशाहाद्वा शान्ति याति विनौषधम् ॥५॥
ऊष्मणा तूष्मजारूपा सकण्डूः स्पर्शनप्रिया ।
नाम्ना पाणिसहा ख्याता सप्ताहाच्छुष्यति स्वयम् ॥६॥
चतुर्थी सर्षपाकारा पीतसर्षपवर्णिनी ।
नाम्ना सर्षपिका ज्ञेयाऽभ्यङ्गमत्र विवर्जयेत् ॥७॥
किञ्चिदूष्मनिमित्तेन जायते राजिकाकृतिः ।
एषा भवति बीजानां सुखं शुष्यति च स्वयम् ॥८॥
कोष्ठवज्जायते षष्ठी लोहितोत्ततमण्डला ।
ज्वरपूर्वा व्यथायुक्ता ज्वरस्तिष्ठेद्दिनत्रयम् ॥९॥
स्फोटानां मेलनादेषा बहुस्फोटाऽपि दृश्यते ।
एकस्फोटे च कृष्णा च बोद्धव्या चर्मजाभिधा ॥

इति शीतलानिदानम् ।

———

वेगं धारयितुं तासां न विदन्ति सुखं क्वचित् ।
शिरः शिथिलता तस्या मुखं तालु च शुष्यति ॥४॥
मूर्च्छा जृम्भा प्रलापश्च त्वग्रूक्षा चातिमात्रतः ।
भक्ष्यैर्भोज्यैश्च पेयैश्च न तृप्तिं लभते क्वचित् ॥५॥
सन्धारणाच्छरीरस्य ता आपः क्षोभसंज्ञिताः ।
ततः सोमक्षयात् स्त्रीणां सोमरोग इति स्मृतः ॥६॥

इति सोमरोगनिदानं समाप्तम् ।

## अथ शीतलानिदानम् ।

देव्या शीतलयाऽऽक्रान्ता मसूर्यः शीतला बहिः ॥
ज्वरयेयुर्यथा भूताधिष्ठितो विषमज्वरः ॥१॥
ताश्च सप्तविधाः ख्यातास्तासां भेदान्प्रचक्ष्महे ।
ज्वरपूर्वा बृहत्स्फोटैः शीतला बृहती भवेत् ॥२॥
सप्ताहान्निः सरत्येव सप्ताहात्पूर्णतां व्रजेत् ।
ततस्तृतीये सप्ताहे शुष्यति स्खलति स्वयम् ॥३॥
वातश्लेष्मसमुद्भूता कोद्रवा कोद्रवाकृतिः ।

तां कश्चित्प्राह पक्वेति सा तु पाकं न गच्छति ॥४॥
जलशूकवदङ्गानि सा विध्यति विशेषतः ॥
सप्ताहाद्वा दशाहाद्वा शान्तिं याति विनौषधम् ॥५॥
ऊष्मणा तूष्मजारूपा सकण्डूः स्पर्शनप्रिया ।
नाम्ना पाणिसहा ख्याता सप्ताहाच्छुष्यति स्वयम् ॥६॥
चतुर्थी सर्षपाकारा पीतसर्षपवर्णिनी ।
नाम्ना सर्षपिका ज्ञेयाऽभ्यङ्गमत्र विवर्जयेत् ॥७॥
किञ्चिदूष्मनिमित्तेन जायते राजिकाकृतिः ।
एषा भवति बीजानां सुखं शुष्यति च स्वयम् ॥८॥
कोष्ठवज्जायते षष्ठी लोहितोत्ततमण्डला ।
ज्वरपूर्वा व्यथायुक्ता ज्वरस्तिष्ठेद्दिनत्रयम् ॥६॥
स्फोटानां मेलनादेषा बहुस्फोटाऽपि दृश्यते ।
एकस्फोटे च कृष्णा च बोद्धव्या चर्मजाभिधा ॥

इति शीतलानिदानम् ।

—

# अथ अशीतिवातरोगनामानि ।

अशीतिर्वातजा रोगाः कथ्यन्ते मुनिभाषिताः ।
आक्षेपको हनुस्तम्भः ऊरुस्तम्भः शिरोग्रहः ॥१॥
बाह्यायामोऽन्तरायामः पार्श्वशूलं कटिग्रहः ।
दण्डापतानकः खल्ली जिह्वास्तम्भस्तथाऽर्दितम् ॥२॥
पक्षाघातः क्रोष्टुशीर्षो मन्यास्तम्भश्च पङ्गुता ।
कलायखञ्जता तूनी प्रतितूनी च खञ्जता ॥३॥
पादहर्षो गृध्रसी च विश्वाची चापबाहुकः ।
अपतानो व्रणायामो वातकण्टोऽपतन्त्रकः ॥४॥
अङ्गभेदोऽङ्गशोषश्च मिन्मिनत्वं च कल्लता ।
प्रत्यष्ठीलाऽष्ठीलिका च वामनत्वं च कुब्जता ॥५॥
अङ्गपीडाऽङ्गशूलं च सङ्कोचस्तम्भरूक्षताः ।
अङ्गभङ्गोऽङ्गविभ्रंशो विड्ग्रहो बद्धविट्कता ॥६॥
मूकत्वमतिजृम्भा स्यादत्युद्गारोऽन्त्रकूजनम् ।
वातप्रवृत्तिः स्फुरणं सिराणां पूरणं तथा ॥७॥
कम्पः कार्श्यं श्यावता च प्रलापः क्षिप्रमूत्रता ।

निद्रानाशः स्वेदनाशो दुर्बलत्वं बलक्षयः ॥८॥
अतिप्रवृत्तिः शुक्रस्य कार्श्यं नाशश्च रेतसः ।
अनवस्थितचित्तत्वं काठिन्यं विरसास्यता ॥९॥
कषायवक्त्रताऽऽध्मानं प्रत्याध्मानं च शीतता ।
रोमहर्षश्च भीरुत्वं तोदः कण्डू रसाज्ञता ॥१०॥

## चत्वारिंशत्पित्तरोगनामानि ।



शब्दाज्ञता प्रसुप्तिश्च गन्धाज्ञत्वं दृशः क्षयः ।
अथ पित्तभवा रोगाश्चत्वारिंशदिहोदिताः ॥१॥
धूमोद्गारो विदाहः स्यादुष्णाङ्गत्वं मतिभ्रमः ।
कान्तिहानिः कण्ठशोषो मुखशोषोऽल्पशुक्रता ॥२॥
तिक्तास्यताऽम्लवक्त्रत्वं स्वेदस्रावोऽङ्गपाकता ।
क्लमो हरितवर्णत्वमतृप्तिः पीतगात्रता ॥३॥
रक्तद्रावोऽङ्गदरणं लोहगन्धास्यता तथा ।
दौर्गन्ध्यं पीतमूत्रत्वमरतिः पीतविट्कता ॥४॥

# अथ अशीतिवातरोगनामानि ।

अशीतिर्वातजा रोगाः कथ्यन्ते मुनिभाषिताः ।
आक्षेपको हनुस्तम्भः ऊरुस्तम्भः शिरोग्रहः ॥१॥
बाह्यायामोऽन्तरायामः पार्श्वशूलं कटिग्रहः ।
दण्डापतानकः खल्ली जिह्वास्तम्भस्तथाऽर्दितम् ॥२॥
पक्षाघातः क्रोष्टुशीर्षो मन्यास्तम्भश्च पङ्गुता ।
कलायखञ्जता तूनी प्रतितूनी च खञ्जता ॥३॥
पादहर्षो गृध्रसी च विश्वाची चापबाहुकः ।
अपतानो व्रणायामो वातकण्टोऽपतन्त्रकः ॥४॥
अङ्गभेदोऽङ्गशोषश्च मिन्मिनत्वं च कल्लता ।
प्रत्यष्ठीलाऽष्ठीलिका च वामनत्वं च कुब्जता ॥५॥
अङ्गपीडाऽङ्गशूलं च सङ्कोचस्तम्भरूक्षताः ।
अङ्गभङ्गोऽङ्गविभ्रंशो विड्ग्रहो बद्धविट्कता ॥६॥
मूकत्वमतिजृम्भा स्यादत्युद्गारोऽन्त्रकूजनम् ।
वातप्रवृत्तिः स्फुरणं सिराणां पूरणं तथा ॥७॥
कम्पः कार्श्यं श्यावता च प्रलापः क्षिप्रमूत्रता ।

निद्रानाशः स्वेदनाशो दुर्वलत्वं बलक्षयः ॥८॥
अतिप्रवृत्तिः शुक्रस्य कार्श्यं नाशश्च रेतसः ।
अनवस्थितचित्तत्वं काठिन्यं विरसास्यता ॥९॥
कषायवक्त्रताऽऽध्मानं प्रत्याध्मानं च शीतता ।
रोमहर्षश्च भीरुत्वं तोदः कण्डू रसाज्ञता ॥१०॥

## चत्वारिंशत्पित्तरोगनामानि ।



शब्दाज्ञता प्रसुप्तिश्च गन्धाज्ञत्वं दृशः क्षयः ।
अथ पित्तभवा रोगाश्चत्वारिंशदिहोदिताः ॥१॥
धूमोद्गारो विदाहः स्यादुष्णाङ्गत्वं मतिभ्रमः ।
कान्तिहानिः कण्ठशोषो मुखशोषोऽल्पशुक्रता ॥२॥
तिक्तास्यताऽम्लवक्त्रत्वं स्वेदस्रावोऽङ्गपाकता ।
क्लमो हरितवर्णत्वमतृप्तिः पीतगात्रता ॥३॥
रक्तद्रावोऽङ्गदरणं लोहगन्धास्यता तथा ।
दौर्गन्ध्यं पीतमूत्रत्वमरतिः पीतविट्कता ॥४॥

पीतावलोकनं पीतनेत्रता पीतदन्तता ।
शीतेच्छा पीतनखता तेजोद्वेषोऽल्पनिद्रता ॥५॥
कोपश्च गात्रसादश्च भिन्नविट्कत्वमन्धता ।
उष्णोच्छ्वासत्वमुष्णत्वं मूत्रस्य च मलस्य च ॥६॥
तमसो दर्शनं पीतमण्डलानां च दर्शनम् ।
निःसरत्वं च पित्तस्य चत्वारिंशद्रुजः स्मृताः ॥७॥

## विंशतिश्लेष्मरोगनामानि ।

कफस्य विंशतिः प्रोक्ता रोगास्तन्द्राऽतिनिद्रता ।
गौरवं मुखमाधुर्यं मुखलेपः प्रसेकता ॥१॥
श्वेतावलोकनं श्वेतविट्कत्वं श्वेतमूत्रता ।
श्वेताङ्गवर्णता शैत्यमुष्णेच्छा तिक्तकामिता ॥२॥
मलाधिक्यं च शुक्रस्य बाहुल्यं बहुमूत्रता ।
आलस्यं मन्दबुद्धित्वं तृप्तिर्घर्घरवाक्यता ॥३॥
अचैतन्यं च गदिता विंशतिः श्लेष्मजा गदाः ।

# अथ आक्षेपकज्वरनिदानम् ।

## (Cerebro Spinal Fever)

आक्षिप्यन्ति यतोऽङ्गानि सङ्कोचं यान्ति चाश्मा ।
घोरो ज्वरश्च संज्ञाहृत् सोऽयमाक्षेपको मतः ॥१॥

निदानम्-देशे बहुजनाकीर्णे रजोधूमाकुले तथा ।
वसतां स्याद्दरिद्राणां प्रायः जीवाणुजः ज्वरः ॥२॥

सम्प्राप्तिः-मस्तिष्कमूले परितः सुषुम्नाकाण्डं च-
तच्छादिकालान्तराले ।
विषं क्रमात् पूयसमां लसीकां संहत्य
दोषानखिलान् प्रकोप्य ॥३॥
चेष्टावहानामथ नाडिकानामुत्तेजनादाक्षिपदङ्गकानि ।
सङ्कोच्य शाखाश्च निहन्ति संज्ञामाक्षेपके
दुर्लभजीवितस्य ॥४॥

रूपम्-घोरा शिरोव्यथा छर्दिः कदाचिच्छीतवेपथू ।
ग्रीवास्तम्भः बलाच्छीर्षं पश्चादाकृष्यते, बलात् ॥५॥
संकुचन्त्यपि चाङ्गानि वक्रे स्यातां च लोचने ।

ज्वरवृद्धिः भवेन्नित्यं शाखाः स्तब्धा भवन्ति च । ६॥
तन्द्रामोहप्रलापाः स्युस्तथाक्षेपो मुहुर्मुहुः ।
लक्ष्मणां श्यावरक्तानां गात्रेषु च समुद्भवः ॥७॥
स्यादिन्द्रियप्रणाशश्च क्रमादाक्षेपके ज्वरे ।
एकाहान्म्रियते कश्चित् त्र्यहाद्वा दारुणे गदे ॥८॥
क्लिश्यंस्त्रिचतुरानाथ सप्ताहान् विजहात्यसून् ।
कश्चिच्चतुष्पात् सम्पत्तौ दिष्ट्या कश्चन जीवति ॥६॥

इति आक्षेपकज्वरनिदानम् ।

## अथ दण्डकज्वरनिदानम् ।

( Dengue डेंगू )

अस्थिसन्धिरुजाघोरा लगुडाघातजा इव ।
यस्मिन् क्षिप्रोदयलयः वीसर्पोऽखिलगात्रगः ॥१॥
सञ्चारि शोथयुक् चैव सन्धिःशूलं हि लक्ष्यते ।
प्रतिश्यायोऽथ कासश्च कण्ठे पीडा प्रजायते ॥२॥
पुनरावर्तमानोऽसावष्टाहेन प्रमुञ्चति ।

चिरं सन्धिरुजाः सन्ति स ज्ञेयः दण्डकज्वरः ॥३॥
स जानपदिकश्चैव कफवातप्रकोपजः ।
बालानां जरतां चापि दारुणः परिलक्ष्यते ॥४॥

इति दण्डकज्वरनिदानम् ।

## कर्णमूलिज्वरनिदानम् ।

( Mumps मम्पस् )

कर्णस्यैकतरे पार्श्वे द्वितीयेऽनुपदं पुनः ।
शोथः सरुग् ज्वरकरः कर्णमूलिक उच्यते ॥१॥
शूयन्ते कर्णमूलस्था जिह्वाधोवर्तिनस्तथा ।
ग्रन्थयोऽधोहनुस्था वा, ततोऽयं पञ्चषैर्दिनैः ॥२॥
शाम्यति, च रुजाशोथौ जायेते मुष्कयोः पुनः ।
नराणां योषितां क्वापि भगेऽपि स्तनयोरपि ॥३॥
सर्वे विकाराः शाम्यन्ति दशाहाच्च सुखं भवेत् ।
स जानपदिकः प्रायः वातश्लेष्मकृतो ज्वरः ॥४॥
बालानामथ यूनाञ्च विशेषण प्रवर्तते ।

उपद्रवा-क्लोम्नि शीर्षकलायां वा शोथश्चार्दिनमेत्र च ।
उपद्रवा हि दृश्यन्तते ज्वरेऽस्मिन् कर्णमूलिके ॥५॥
इति कर्णमूलिज्वरनिदानम् ।

## अथ माल्टाज्वरनिदानम् (Malta Fever)

सन्धिशूलं ज्वरस्तीव्रः स्वेदाधिक्यं तथैव च ।
वृद्धप्लीहा चिरस्थायी माल्टा ज्वर इष्यते ॥१॥
तद् द्वीप वासिनामासीत् प्राक् संज्ञेय मतोमता ।
इति माल्टाज्वरनिदानम् ।

## अथ कालज्वर निदानम् (Kala-Azar)

प्राय आनूपदेशेषु भूवाष्पक्रिमिकारणैः ।
कालज्वरः प्रजायेत लक्षणं तस्य वक्ष्यते ॥१॥
तस्य जीवाणवस्त्वस्थिमज्जान्त्रफलकोषयोः ।
श्वासयन्त्रान्त्रभित्त्यां च तिष्ठन्ति, ते विशेषतः ॥२॥
यकृत्प्लीहाः, ततः वृद्धाः क्षुब्धाः सर्पन्ति तन्तूवत् ।
यकृत्प्लीहाभिवृद्धिः स्याद्विसर्गी ज्वरस्तथा ॥३॥

सप्ताहत्रितयं यावदधिकं वा निरन्तरम् ।
किञ्चित्कालं विमुच्यैवं पुनरावर्तते ज्वरः ॥४॥
पूर्वोक्तैर्लक्षणैः प्रायः, रक्तत्वं हीयते क्रमात् ।
पाण्डुता वर्द्धते देहे, ग्रहणीप्रायलक्षणैः ॥५॥
नासया रदनैः प्रायः क्वचिच्छोणितनिर्गमः ।
हस्तयोः पादयोः वक्त्रे शोथः सञ्जायते ततः ॥६॥
प्रायः कष्टज्वरोऽयं स्यान्मुक्त्वा सद्यः प्रतिक्रियाम् ।
उपद्रवाः-छर्द्यरोचकसंयुक्तं क्षीणमांसबलेन्द्रियम् ॥७॥
आक्रान्तफुस्फुसं वान्यैः संयुतं यक्ष्मलक्ष्मणैः ।
विड्भेदज्वरलीनञ्च कालज्वरयुतं त्यजेत् ॥८॥

इति कालज्वरनिदानम् ।

## अथ आहकज्वरनिदानम् ।

तनुना रक्तशोथेन युक्तो नासापुटान्तरे ।
गात्रशूलज्वरकरः श्लेष्मणा ह्याहकज्वरः ॥१॥

इति आहकज्वरनिदानम् ।

# अथान्त्रिकज्वरनिदानम् ।

(Enteric Fever or Typhoid Fever)

नित्यमध्वपरिश्रान्ता उपवासविकर्षिताः ।
ये वसन्ति च दुर्गन्धसंकुलावसथादिषु ॥१॥
तेषां प्रायेण मलिनाहारपानोपयोगतः ।
सर्वर्तुष्वपि परं प्रायः ग्रीष्मवर्षाशरत्सु वै ॥२॥
आन्त्रिकाख्यो ज्वरो घोरः दृश्यते कच्छ्रलक्षणः ।
तस्य जीवाणवः मूलं दण्डाकाराः विशेषतः ॥३॥
प्लीह्नि, मूत्राशये, पित्ताशये, रक्तेऽन्त्रजे व्रणे ।
पिडकासु तथा स्वेदे विशि चापि कृतालयाः ॥४॥
विशिष्टं कारणं प्रोक्ताः, संक्रामन्ति नरान्नरम् ।
विण्मूत्रस्वेदजैर्दोषैराहारद्रव्यदूषणात् ॥५॥
कोपयन्तः रसं रक्तं दोषांश्चाप्यान्त्रमाश्रिताः ।
क्षुण्वन्ति चरमं भागं क्षुद्रान्त्राणां शनैः शनैः ॥६॥
ततोऽन्त्रक्षतसंवृद्धौ यदा रक्तस्य निर्गमः ।
भिन्नान्त्रता तदाऽसाध्यो भवत्येष विनिश्चयः ॥७॥

प्राग्रूपम्—

सादः शिरसि च पीडा विड्बन्धश्चारुचिस्ततोऽप्यरतिः ।
सप्ताह इति ज्ञेयं प्राग्रूपं त्वान्त्रिकज्वरस्यैतत् ॥८॥

रूपम्—

अष्टमे दिवसे प्राप्ते ज्वरस्तीव्रतरो भवेत् ।
सन्ध्ययोश्च ज्वरः प्रायः क्रमारोहेण लक्ष्यते ॥९॥
पिडका मौक्तिकाकाराः, प्लीह्नश्चाप्यभिवर्द्धनम् ।
उद्भूयोद्भूय लीयन्ते पिडका मौक्तिकैः समाः ॥१०॥
जायते बद्धकोष्ठत्वं क्वचित्प्लीहाभिवर्द्धते ।
स्पर्शासहत्वं कोष्ठस्य क्षतान्त्रत्वस्य लक्षणम् ॥११॥
पञ्चाहात् परतः प्रायः क्वचिन्नैव चिरेण वा ।
चणमुद्गादि यूषाभं साध्मानमतिसार्यते ॥१२॥
अथ द्वितीये सप्ताहे ज्वरः वृद्धोऽवतिष्ठते ।
तदा प्रलाप आक्षेपः कासस्तन्द्रा प्रमीलकः ॥१३॥
दौर्बल्यं मुखशोषश्चारत्याध्मानो विशेषतः ।
जिह्वा स्याद्रक्तपर्यन्ता मध्ये म्लाना च कर्कशा ॥१४॥

स्फुटिताधिकश्च सन्तापः धमनी नाति चञ्चला ।
सान्निपातिकलिङ्गानामन्येषाञ्चापि दर्शनम् ॥१५॥
अथ तृतीये सप्ताहे प्राप्ते दोषाः पचन्ति वै ।
ज्वरः सोपद्रवगणः क्रमेणैवावरोहति ॥१६॥
गते तृतीये सप्ताहे ज्वरः प्रायो विमुञ्चति ।
इयं साधारणी प्रोक्ता मर्यादाऽस्य ज्वरस्य वै ॥१७॥
यदा वैषम्यमाप्नोति तदा सा द्विगुणा भवेत् ।
कदाचित्त्रिगुणा दृष्टा, जायन्तेऽन्येप्युपद्रवाः ॥१८॥
मिथ्योपचारादान्त्रेषु यदा यक्ष्मोपजायते ।
आक्रम्येते फुप्फुसौ च जायन्तेऽन्येप्युपद्रवाः ॥१९॥

इति आन्त्रिकज्वरनिदानम्

## अथ ग्रन्थिकज्वरनिदानम् ।

( Plague प्लेग )

ग्रीवावंक्षणकक्षादिग्रन्थिषु शोफरुक्करः ।
घोरः जनपदध्वंसी ग्रन्थिकाख्यो ज्वरः स्मृतः ॥१॥
तस्य जीवाणवो मूलं मूषिकादिषु सम्भवाः ।

श्वसनैः स्पर्शनैः नग्नस्फुटपादचरैस्तथा ॥२॥
संकीर्णेषु निवासेषु संक्रामन्ति नरान्नरम् ।
तथा तद्रोगजुष्टेभ्यो मूषिकेभ्यश्च सम्भवः ॥३॥
ग्रन्थिकोऽग्रन्थिकश्चापि स द्विधा परिकीर्तितः ।
अग्रन्थिकोऽपि द्विविधः भिषग्भिः परिकीर्तितः ॥४॥
एकः श्वासनिकः दृष्टः स वै फुप्फुसदूषणात् ।
अन्यः स धातुजः प्रोक्तः रसादीनां प्रदूषणात् ॥ ५ ॥
( रसादिषु विषक्रमात् । )

प्राधान्यव्यपदेशाच्च ग्रन्थिक ज्वर उच्यते ॥

रूपम्—

आदावेव ज्वरस्तीव्र. शिरःशूलं तथा भ्रमः ॥ ६ ॥
उत्क्लेशः वमनं स्रस्ताङ्गता दौर्बल्यमेव च ॥
धमनी चञ्चला, मोहः, तृष्णाधिक्यं तथैव च ॥ ७ ॥
दूयन्ते ग्रन्थयश्चैव कक्षादिषु समाश्रिताः ।
तृतीये वा चतुर्थेऽह्नि ग्रन्थिशोथो विवर्द्धते ॥ ८ ॥
तोदः स्पर्शाहत्वं च ग्रन्थौ पाकश्चिरादपि ।

श्रुतौ नेत्रे प्रसुप्तिः स्यात् न चेष्टां काञ्चिदीहते ॥ ९ ॥
अभिन्यासिकलिङ्गानामन्येषामपि दर्शनं ।
दग्धवत् कर्कशा जिह्वा धमनी शिथिला भृशम् ॥ १० ॥
द्वित्रैर्वा पञ्चषैर्वापि दशभिर्वा दिनैः क्वचित् ।
सद्यो वा म्रियते रोगी चिराद्वा कोऽपि सिध्यति ॥११॥
बहुजग्रन्थिजः शोफः पाकश्चापि शुभः स्मृतः ।
द्वितीयेऽग्रन्थिके श्वासमार्गं सङ्क्रमते विषम् ॥ १२ ॥
दूयेते फुप्फुसौ, श्वासगतिस्तीव्राऽरतिस्तथा ।
उरो विदह्यते, चैव ततो रक्तस्य निर्गमः ॥ १३ ॥
सान्निपातिलिङ्गानामन्येषाञ्चापि दर्शनम् ।
प्राय एषोऽप्यसाध्यः स्यात् भाग्यात् कोपि विमुच्यते १४
तृतीयेऽग्रन्थिके रक्तादिषु संक्रमते विषम् ।
सर्वाण्येव हि लिंगानि पूर्वोक्तान्यतिमात्रया ॥ १५ ॥
शय्यानिपतितो रोगी मृतकल्पो हि विद्यते ।
पञ्चषैवी दिनैः प्रायः स यात्येव यमालयम् ॥ १६ ॥
अतएषोऽप्यसाध्यः स्यात्—भाग्यात् कोऽपि प्रमुच्यते ॥

उपद्रवः—कासः मूत्रावरोधश्च रक्तातीसार उल्वणः ॥१७॥
छर्दिर्लोहितपित्तञ्च ग्रन्थिके स्युरुपद्रवाः ॥
साध्यलक्षणम्-शीघ्रपाको हि ग्रन्थीनां बहूनां वा समुद्भवः ॥
वृद्धो वा बालको वापि सुखसाध्यस्य लक्षणम् ॥
अरिष्टम्-संज्ञाचेष्टावहानां स्यादिन्द्रियाणां विनाशनम् ॥१६
सपद्येवातिसारेणाक्रान्तो रोगी न जीवति ॥
आकृष्णरक्तं सकफं ष्ठीवेत् यः श्वासपीडितः ॥ २० ॥
आक्रान्तौ फुफ्फुसौ यस्य-स यात्येव यमालयम् ।
अग्रन्थौ ग्रन्थिलिङ्गानि, प्रायशः स्युर्यमातिथेः ॥ २१॥

इति ग्रन्थिक ज्वरनिदानम्

## अथ श्लेष्मकज्वरनिदानम् ।

(Influenza) इन्फ्लुएञ्जा ।

श्लेष्मजोपद्रवाः प्रायः प्रादुःषन्तीह यद्भृशम् ।
वातश्चानुगुणस्तत्र सान्निपातिकलक्षणैः ॥ १ ॥
ततो जनपदध्वंसी ज्वरोऽसौ श्लेष्मकः स्मृतः ॥

निदानम्—

श्वसनेरितजीवाणुसम्भवं विषमज्वरम् ॥ २ ॥
युगपल्लोकेषु विसृतं श्वासमार्गेण तं ज्वरम् ।
विदधाति, क्वचिद्वाथ भुक्तमार्गेण संक्रमः ॥ ३ ॥
जनाज्जने हि संक्रान्तिः श्वसनादिनिमित्ततः ।

सम्प्राप्तिः—

विकाराश्चास्य जायन्ते प्रायः फुप्फुसयोः क्वचित् ॥ ४ ॥
अन्नमार्गे समग्रेऽपि क्वापि वा सर्वधातुषु ।
वातश्लेष्मोल्वणं ह्यत्र सन्निपात मुदीरयन् ॥ ५ ॥
विषं धातून् विकुरुते हन्ति तेन सहस्रशः ।

रूपम्—

प्रतिश्यायोऽङ्गमर्दश्च शिरःशूलं गलग्रहः ॥ ६ ॥
शीतं कम्पः कटीपृष्ठोरसां तीव्राश्च वेदनाः ।
ज्वरः कासोऽङ्गसादश्च भवेत् कार्श्यं सपद्यपि ॥ ७ ॥
भृशं हि बलहानिस्याल्लिङ्गानि श्लेष्मकस्य हि ।
सामान्यतः, विशेषात्तु फुप्फुसाक्रमणे सति ॥ ८ ॥

रक्तनिष्ठीवनं प्रायः श्लेष्मणा मिश्रितं तथा ।
प्रलापो रक्तवर्णत्वं श्वासवृद्धिस्तथैव च ॥ ९ ॥
यदा दोषप्रकोपःस्यादन्नमार्गे तदा भवेत् ।
वमनं वातिसारश्च द्वयोर्वा दर्शनं क्वचित् ॥ १० ॥
शूलं च जायते जातु, कदाचित् कामला भवेत् ।
विषस्यात्यर्थयोगेन सर्वधातुप्रदूषणात् ॥ ११ ॥
अभिन्यासंसमं लिङ्गं जायते तन्न मुञ्चति ।
दौर्बल्यं तु चिरायैव कृच्छ्रा स्यात् बहुदोषता ॥ १२ ॥

इति श्लेष्मक ज्वरनिदानम् ।

## अथ सन्धिकज्वरनिदानम् ।

( Rheumatic fever ) रीयुमैटिक फीवर )

व्रणशोथरुजातोदैः सन्धीनापीडयन् भृशम् ।
ज्वरो घोरः सहृद्रोगः सन्धिको नाम कथ्यते ॥ १ ॥

निदानम्—

हेमन्ते, शिशिरे चर्तौ बाल्ये वा यौवनेऽपि वा ।

वर्षाशीतवसन्तेषु तथा क्लिन्नासु भूमिषु ॥ २ ॥
निःशङ्कं चारिणां नित्यं प्रायशोऽपचिते वले।
विषं जीवाणुजं तस्य धातुषु पसृतं गलात् ॥ ३ ॥
वातपित्तोल्वणं देहे सन्निपातमुदीरयेत्।
तस्य जीवाणवः कैश्चिद्विन्द्वाकारा मता बुधैः ॥ ४ ॥
सन्धीनां परितः दृष्टः व्रणशोथोऽतिदारुणः।
( तरुणास्थि शिरःसु च। )
व्रणशोथो भवेद्धोरो कलातारल्यमेव च ॥ ५ ॥
अन्तः सन्धिवलासश्च वर्द्धमानो विदह्यते।
विषप्रभावादस्मिन् वै क्षीयन्ते शोणिताणवः ॥ ६ ॥
परितः हृदयं चापि सञ्चयोऽपां कलापुटे।
हृन्मध्ये हृत्कपाटे वा विकारा व्रणशोथजाः ॥ ७ ॥
श्वासयन्त्रकलाशोथो क्वचित् सव्येऽपि जायते।
श्वासकासादिभिर्लिङ्गैः फुप्फुसाक्रमणं क्वचित् ॥ ८ ॥
लक्षणम्—
ज्वरः साधारणोऽकस्मात् शीतेनैव प्रवर्द्धते।

कण्ठदाहोऽङ्गमर्दश्च ग्रीवास्तम्भो हृदि व्यथा ॥ ९ ॥
स्वेदो मूत्राल्पता शोथः ग्रीवाग्रन्थिषु जायते
कफोण्यां मणिबन्धे वा गुल्फे जानुनि वा क्वचित् ॥१०॥
शोथश्च रक्तिमायुक्तो जायते घोरलक्षणः
स्पर्शासहो भवेद्रोगी पीडा तीव्रतरा भवेत् ॥ ११ ॥
क्रमशश्चाभिभूयन्ते नरस्यान्येऽपि सन्धयः
ततश्च ज्वरवृद्धिः स्यात्पूर्वोक्तैश्चापि लक्षणैः ॥ १२
एवं त्रिसप्ताहावधिं भुक्त्वा वा द्विगुणां क्वचित्
तथोपक्रमनैपुण्याज्ज्वरोऽयं शमनं व्रजेत् १३
पुनरावर्तते चापि केषाञ्चित् सन्धिकज्वरः
सन्निपातभवैर्लिङ्गैः प्राणहृत् सोऽनुपक्रमात् ॥१४॥
हृद्रोगादायतौ दुःखं प्रायः सर्वस्य जायते ।
सश्रमश्वासशोथाद्यैः सीदन् काले जहात्यसून् ॥१५॥
यूनां सन्धिषु बालानां हृदये च विशेषतः ।
विकाराः प्रायशोदृश्याः सन्धिकाख्ये ज्वरे ध्रुवम् ॥१६॥

इति सन्धिकज्वरनिदानम् ।

# अथ श्वसनकज्वरनिदानम्

## ( Pneumonia न्यूमोनिया )

लाक्षारसाभं यः ष्ठीवेत् रक्तं श्वासज्वरार्दितः ।
स्त्यानफुफ्फुसमूलस्य तस्य श्वसनको ज्वरः ॥

निदानम्—भोजनाच्छादनैर्हीनाः दुर्बला ये विशेषतः ।
दीना वा दूनचित्ता वा नित्यं श्रान्ताश्च ये नराः ॥२॥
अजीर्णिनः यकृद्वृक्कशोथिनोऽमितमद्यपाः ।
मिथ्याहारविहारा ये शीतवर्षादिबाधनात् ॥३॥
अभिघातात् क्वचित् पूतिगन्धयोगेन कुत्रचित् ।
क्वचिद्वा व्याधिनानेन पीडितस्याति सङ्गमात् ॥४॥
सर्वेष्वृतुषु भूम्नातु वर्षासु शिशिरे मधौ ।
ज्वरः प्रादुर्भवत्येष जीवाणुविषसम्भवः ॥५॥

सम्प्राप्तिः—विषकीटोच्छ्रिता दोषाः श्वासमार्गकृतालयाः ।
फुफ्फुसान्तः प्रकोष्ठेषु स्त्यानीकुर्वन्ति शोणितम् ॥६॥
ततः शोणित सङ्घातात् सव्ये सव्येतरेऽथवा ।
द्वयोर्वा जायते शोथः, रुग्ज्वरश्वासकष्टताः ॥७॥

पार्श्वपीडा श्वासकासाववसादोऽथ कम्पनम् ।
पूर्वरूपमिदं प्राहुः बुधाः श्वसनके ज्वरे ॥८॥
रूपम्—अकस्माच्छीतमत्यर्थं ज्वरस्तीव्रं ऽरुचिस्तथा ।
कासः स्यात्पार्श्वशूलं च श्वासवृद्धिः क्रमेण च ॥९॥
कासमानस्य च मुहुर्मुहू रक्तं प्रवर्तते ।
लाक्षारसाभं सान्द्रं च श्लेष्ममिश्रं तथैव च ॥१०॥
स्फूर्जतः नासिकापार्श्वौ तीव्रा श्वासगतिस्तथा ।
कपोलयो रक्तिमा स्यात्ललाटः स्विद्यते भृशम् ॥११॥
गात्रञ्च स्विद्यते, गौरपिडकानां समुद्भवः ।
दौर्बल्य मोहसादाःस्युः प्रलापः कण्ठकूजनम् ॥१२॥
परुषा कर्कशा जिह्वा मलिना वा भवेद्भृशम् ।
धमनी यमतां याति कोमला स्थूल चञ्चला ॥१३॥
ज्वरमोक्षो न यावत् स्यात्—
ज्वरमुक्तेरनन्तरम्—
प्रायः सा मन्दतामेति ज्वरेऽस्मिन्निति निश्चितम् ॥
सप्तमे ह्याष्टमे प्रायः नवमे दशमे क्वचित् ।

अकस्माज्ज्वरमोक्षः स्यात् स्वेदप्राचुर्यमेव च ॥१४॥
कदाचिन्मुच्यते रोगो, जीवितं वा कदाचन ।
मुच्यमानस्तु नैरुज्यं शीघ्रमेव समश्नुते ॥१५॥

साध्यलक्षणम्—

एकस्मिन् फुफ्फुसे दुष्टे ज्वरेऽतीव्रे स्थिते बले ।
पादत्रयस्य सम्पत्तौ मन्तव्या सुखसाध्यता ॥१६॥
भृशं स्वेदो ज्वरस्तीव्रो वृद्धः क्षीणोऽथवातुरः ।
पादत्रयस्य सम्पत्तौ स तु जीवेत् कदाचन ॥१७॥

अरिष्टलक्षणम्—

यस्य द्वौ फुफ्फुसौ दुष्टौ समग्रो यस्य वैकृतः ।
नासाश्वासो भृशं स्वेदो दुर्लभं तस्य जीवितम् ॥१८॥
मन्दं किञ्चित् प्रलपति स्वेदस्नातः प्रमुह्यति ।
वेपते करपादौ च दुर्लभं तस्य जीवितम् ॥१९॥
अतिसारेण वाक्रान्तो दुर्वारेण कदाचन ।
क्षीणः श्वसनके नार्तः समन्तव्यो यमातिथिः ॥२०॥

---

## अथ श्लैपदिकज्वरः ।

शाखायां मुष्कयोर्वापि रागशोथरुजाकरः ।
पक्षान्ते प्रायशोभावी ज्वरः श्लैपदिकः स्मृतः ॥ १ ॥
अन्ये येऽपि ज्वरा लोके दृश्यन्तेऽनन्तजातयः ।
देशदोषप्रभेदैश्च तेऽपि चिन्त्या यथायथम् ॥ २ ॥

इति श्लैपदिकज्वरनिदानम् ।

## अथ उपसर्गज-विशूचिका-निदानम् ।

यस्यां वम्यतिसारौ तण्डुलजलसदृशौ प्रवर्तेते ।
बहुवेगात्सा तज्ज्ञैरुपसर्गोत्था विशूचिका कथिता ॥ १ ॥
प्रायः जलसंयुक्तास्तद्विषजीवाणवः प्रसर्पन्ति ।
लोके तज्जलपानात्, रोगोऽयं जनपदध्वंसी ॥ २ ॥
सत्यपि जनप्रचारे जनसंहारे प्रचरति लोकेषु ।
द्वौ हेतू मुख्यतमौ हृद्दौबल्यमथाप्यजीर्णश्च ॥ ३ ॥
यस्य मनो बलवत्स्यात्, बलवानग्निश्च जाठरो यस्य ।
तादृक्षं नरसिंह त्वभिभवति विषूचिका कदाचिन्नो ॥ ४॥

कौष्ठिकः—

आमवाताभिघाताभ्यां पूर्वोक्तादपि लक्षणात् ।
जायते हार्दिके कोष्ठे गद एष हि कौष्ठिकः ॥ ५ ॥
ज्वरदाहारुचिकम्पाः वैवर्ण्यं संक्षयस्तथावह्नेः ।
श्वासः कासः यक्ष्मा कोष्ठे सञ्जायते तथा पूयम् ॥ ६ ॥
मूर्च्छाक्षेपविलापा यस्मिन् स्युः विषमगा च नाडीः स्यात् ।
रोगः घोरतरोऽयं क्वचिदपि रोगी विमुच्यते भाग्यात् ७॥

पृथुकः—

हृत्कोष्ठे रक्तगतिर्मिथ्याचाराद्धि व्याहता भवति ।
पृथुतां याति हि पेशी हृदयस्था, जायते महत्कष्टम् ॥ ८॥
दौर्बल्यं हृदयस्थं रुक्कम्पो श्वासकृच्छ्रता तथा भवति ।
अरतिभ्रममोहाः स्युः पृथुके चिह्नानि लक्ष्यन्ते ॥ ९ ॥

आयामिकः

हृत्कोष्ठस्य प्रसारः यावज्जायेत दारुणो व्याधिः ।
आयामिक इत्युक्तः तस्मिन् श्वासः भ्रमोऽथ मूर्च्छा च १०॥
शूनत्वं गात्राणां हृत्कम्पो वह्निमार्दवं चैव ।

बलहानिर्मांसक्षयः निद्रानाशः जलोदरश्चैव ॥ ११ ॥
अन्यान्यपि लिङ्गानि जायन्ते हार्दिकानि वै तस्य ॥१२॥

परिक्षमः—

क्षयात्सञ्जायते व्याधिर्योऽसौ घोरः परिक्षयः ।
क्षीयते तत्र हृत्पेशी दौर्बल्यं सदनं भ्रमः ॥ १३ ॥
वेपते हृदयं बह्नेर्नाशः श्वासश्च जायते ।
क्रमाद्विवर्द्धते शोफः, जायन्तेऽन्येऽप्युपद्रवाः ॥ १४ ॥

मेदःसूत्रम्—

हृदिस्थमांससूत्रेषु मेदःकणचयो यदा ।
भवेत् व्याधिस्तदा मेदःसूत्रमित्याख्यया स्मृतः ॥ १५ ॥
वेपते हृदयं तस्य धमनी मन्दगामिनी ।
भ्रमावसाद मूर्च्छाःस्युर्नाडीनाश्च बलक्षयः ॥ १६ ॥
एवं हृद्वृत्तिसंरोधान्मृत्युश्च सहसा भवेत् ।
अतः सद्यश्चिकित्स्योऽयं व्याधिःपरमदारुणः ॥ १७ ॥

विक्षेपिका

हृदयाक्षेपिका पीडा या सा विक्षेपिता मता ।

यदाऽग्नौ जायते व्याधिस्तदा कोष्ठेऽप्युरोस्थ्यधः ॥१८॥
वामबाहौ तदंसास्थिन ग्रीवायां पृष्ठदेशतः ।
वेदना जायते घोरा प्राणमर्मप्रपीडन ॥ १६ ॥
तोदभेदसमाकर्षाः दाहस्तत्र च जायते ।
मुहुर्मुहुः श्वासरोधः शीता त्वक् स्वेदनिर्गमः ॥ २० ॥
आध्मानानाहमोहाश्च वैवर्ण्यं कृशताऽरुचिः ।
क्रमादिन्द्रियविध्वंसो मरणं चाप्यनात्मनः ॥ २१ ॥

इति हृद्यन्त्ररोगनिदानम् ।

## अथ उरस्तोयनिदानम् ।

उरस्तोयस्य निदानं सम्प्राप्तिश्च ।

विषमज्वरातिसार प्रवाहिका प्लीहपाण्डुशोथेषु ॥ १ ॥
अर्बुदहृदयफिरङ्गोदरयकृद्वृक्करोगेषु ।
रक्ताल्पत्वविकारो यावद्भवतस्तदा भवत्येव ॥ २ ॥
वक्षःफुप्फुसभित्योस्तीव्रः जलसञ्चयः जलोदरवत् ।
प्रायो दक्षिणभागे दृष्टस्तथा क्वचिद्वामे ॥ ३ ॥

प्रायः प्राणहरो वै वक्षस्तोयाभिधः प्रोक्तः ॥ ४ ॥

तथा च—एकस्मिन् वक्षसो भागे द्वयोर्वा जलसञ्चयः ।
प्राणनिर्वाणकृत्प्राय उरस्तोयगदः स्मृतः ॥ ५ ॥

उरस्तोयलक्षणमाह—

श्वासः कष्टतरः श्लेष्मवहनं पादशोथता ।
आस्योष्ठयोश्च नीलत्वं पिपासा स्रोतसां ग्रहः ॥ ६ ॥
नाडीसूक्ष्मतरा शीघ्रगामिनी विषमा तथा ।
मन्दं मन्दं तथा स्वल्पं कृच्छ्रान्मूत्रं प्रवर्तते ॥ ७ ॥
न शायनस्य सौख्यं स्यात् स्थितः यायात् सुखं क्वचित् ।
एवं कृच्छ्रतमो रोग उरस्तोयाभिधः स्मृतः ॥ ८ ॥

इति उरस्तोयनिदानम् ।

## स्मरोन्मादनिदानम् ।

उन्मादो दयिताऽप्राप्तेः शुक्रस्य विकृतेरपि ।
जननेन्द्रियदोषाच्च वैगुण्यादनिलस्य च ।
पुरुषस्य तथा नार्याः स्मरोन्माद इतीरितः ॥ १ ॥

तस्य लक्षणम्—

स्तब्धता वेपनं श्वासः प्रलापः पाण्डुता त्वचि ।
अधैर्यं रोदनं चिन्ता स्मरोन्मादस्य लक्षणम् ॥ २ ॥

तस्य निदानम्—

नयनप्रीतिः प्रथमं चित्तासङ्गस्ततोऽथ सङ्कल्पः ।
निद्राछेदस्तनुतां विषयनिवृत्तिस्त्रपानाशः ॥ ३ ॥
उन्मादो मूर्च्छा मृतिरित्येताः स्मरदशा दशैव स्युः ।
याभिराक्रम्यन्ते दुर्बलहृदयाल्पसत्वाश्च ॥ ४ ॥

इति स्मरउन्मादनिदानम् ।

## अथ गदोद्वेगनिदानम् ।

मनसोऽत्यन्तदौर्बल्यान्मस्तिष्कस्यापि सम्भ्रमात् ।
मिथ्याकाल्पनिको व्याधिः गदोद्वेग इतीरितः ॥ १ ॥
( बिना व्याधिं व्याधिशङ्का गदोद्वेग इतीरितः )
पदार्थत्वाभाववत्त्वादपदार्थगदश्च सः ।
निदानम्—शारीरो मानसो वापि श्रमो भूयान् बलक्षयः ।
आशातन्तोस्तु विच्छेदः शोकोऽकीर्तिः महाभयम् ॥ २ ।

दौर्भाग्यं बीजदोषश्च सत्वस्याभाव एव च ।
अपदार्थगदस्यैते हेतवः कथिता बुधैः ॥ ३ ॥
लक्षणम्--अद्भुतो यादृशो रोगः लक्षणं चापि तादृशम् ।
कोऽप्येवं मन्यते स्त्यानमुदरं भुजगोऽविशत् ॥ ४ ॥
कोष्ठे भ्रमत्यसौ नित्यं भुक्ते यद्भुज्यते मया ।
निर्यास्यति पथा केन केनोपायेन नंक्ष्यति ॥ ५ ॥
केनोपायेन नाशः स्यादुदरस्थस्य तस्य वै ।
कदाचिदुदरे दंशात्प्राणनाशो भवेद्ध्रुवम् ।
कोऽपीत्थं मनुते भेको ममैको मूर्ध्नि संस्थितः ।
विघट्टयति मस्तिष्कं मारयिष्यति मां ध्रुवम् ॥ ७ ॥
कोऽपीत्थं चिन्तयेच्चित्रं कायः काचमयो मम ।
सञ्जातोऽयमतो रक्ष्यः सदाघातात् प्रयत्नतः ॥ ८ ॥
इत्येवं बहुरूपाभिः कल्पनाभिः सदाकुलः ।
गदोद्वेगी सदाभीतः सुखी शुष्येद्दिवानिशम् ॥ ६ ॥
बहुधा सान्त्वनैर्वाक्यैः सान्त्वितोऽपि मुहुर्मुहुः ।
चित्ताद्भ्रममपाकर्त्तुं न स शक्नोति दुर्भयम् ॥ १० ॥

तस्य लक्षणम्—

स्तब्धता वेपनं श्वासः प्रलापः पाण्डुता त्वचि ।
अधैर्यं रोदनं चिन्ता स्मरोन्मादस्य लक्षणम् ।। २ ।।

तस्य निदानम्—

नयनप्रीतिः प्रथमं चित्तासङ्गस्ततोऽथ सङ्कल्पः ।
निद्राछेदस्तनुतां विषयनिवृत्तिस्त्रपानाशः ।। ३ ।।
उन्मादो मूर्च्छा मृतिरित्येताः स्मरदशा दशैव स्युः ।
याभिराक्रम्यन्ते दुर्बलहृदयाल्पसत्वाश्च ।। ४ ।।

इति स्मरउन्मादनिदानम् ।

## अथ गदोद्वेगनिदानम् ।

मनसोऽत्यन्तदौर्बल्यान्मस्तिष्कस्यापि सम्भ्रमात् ।
मिथ्याकाल्पनिको व्याधिः गदोद्वेग इतीरितः ।। १ ।।
( बिना व्याधिं व्याधिशङ्का गदोद्वेग इतीरितः )
पदार्थत्वाभाववत्त्वादपदार्थगदश्च सः ।

निदानम्—शारीरो मानसो वापि श्रमो भूयान् बलक्षयः ।
आशातन्तोस्तु विच्छेदः शोकोऽकीर्तिः महाभयम् ।। २ ।

दौर्भाग्यं बीजदोषश्च सत्वस्याभाव एव च ।
अपदार्थगदस्यैते हेतवः कथिता बुधैः ॥ ३ ॥
लक्षणम्--अद्‌भुतो यादृशो रोगः लक्षणं चापि तादृशम् ।
कोऽप्येवं मन्यते स्त्यानमुदरं भुजगोऽविशत् ॥ ४ ॥
कोष्ठे भ्रमत्यसौ नित्यं भुक्ते यद्‌भुज्यते मया ।
निर्यास्यति पथा केन केनोपायेन नंक्ष्यति ॥ ५ ॥
केनोपायेन नाशः स्यादुदरस्थस्य तस्य वै ।
कदाचिदुदरे दंशात्प्राणनाशो भवेद्‌ध्रुवम् ।
कोऽपीत्थं मनुते भेको ममैको मूर्ध्नि संस्थितः ।
विघट्टयति मस्तिष्कं मारयिष्यति मां ध्रुवम् ॥ ७ ॥
कोऽपीत्थं चिन्तयेच्चित्रं कायः काचमयो मम ।
सञ्जातोऽयमतो रक्ष्यः सदाघातात् प्रयत्नतः ॥ ८ ॥
इत्येवं बहुरूपाभिः कल्पनाभिः सदाकुलः ।
गदोद्वेगी सदाभीतः सुखी शुष्येद्दिवानिशम् ॥ ९ ॥
बहुधा सान्त्वनैर्वाक्यैः सान्त्वितोऽपि मुहुर्मुहुः ।
चित्ताद्भ्रममपाकर्त्तुं न स शक्नोति दुर्भयम् ॥ १० ॥

यश्चास्य बोधयेोद्भ्रान्ति तस्मै द्रुह्यति नित्यशः ।

लक्षणम्—पीडा घोरतरा पक्वाशये तस्य प्रतीयते ।

जिह्वाबलासलिप्ता स्यात्तथा च श्वासपूतिता ॥ ११ ॥

उत्क्लेशः वमनं चैव स्यादिदं जीर्णलक्षणम् ।

स्पर्शशक्तेः प्रखरता पाण्डुत्वमुदरामयः ॥ १२ ॥

हृदि संघातवान् व्याधिः केन वाप्यनुभूयते ।

गदोद्वेगवतान्येन पुरुषत्वस्य संक्षयः ॥ १३ ॥

ज्वरः सततकोऽन्येन दुष्प्रतीकार्य एव च ।

किमाश्चर्यं कम्पनाद्यं जायते च यदा तदा ॥ १४ ॥

इत्थं बहुविधाकारा व्याधयः कल्पनाकृताः ।

भ्रमरूपा प्रजायन्ते निःसत्वानाममेधसाम् ॥ १५ ॥

शक्यन्ते व्याधयो वक्तुं नैते निरवशेषतः ।

धीमद्भिः लक्षणीयास्ते यथास्वं दोषलक्षणैः ॥ १६ ॥

कैशोरे वयसि नैव वार्द्धक्ये नापि जायते ।

रोगोऽयं, ज्ञायते हेतुः प्रायशोऽत्र मनोगतिः ॥ १७ ॥

प्रतिमासं रजःस्रावात् सर्वे शुध्यन्ति धातवः ।

अतः मनोगदः स्त्रीणामेष प्रायो न जायते ॥ १८ ॥

इति गदोद्वेगनिदानम् ।

---

## अथ अचल वातनिदानम् ।

यथैव संस्थया जन्तुर्मोहमाप्नोति चेत्ततः ।
परतोऽपि तथो तिष्ठेत् सापि चेत्क्लेशकृद्भृशम् ॥१॥
स गदोऽचलवाताख्योऽचलसंस्थानमेव च ।
तादवस्थागदश्चापि तथैवापरिकर्तकः ॥ २ ॥
वातागतेः समस्थानात् पूर्वभावस्थितेस्तथा ।
तथैवापरिवृत्तेश्च मतं नाम चतुष्टयम् ॥ ३ ॥
निदानम्—चिन्तनं क्षीण धातुत्वं भयं सत्वस्य संक्षयः ।
वीजदोषस्तथैवैतेऽचलवातस्य हेतवः ॥ ४ ॥
अथास्य लक्षणम्-स्पर्शाज्ञत्वमचेष्टा स्यात्पेशीनां दार्ढ्यमेवच
विनाक्षेपं च मूर्च्छां स्युश्चिह्नान्यचलवातके ॥५॥
विशेषं लक्षणं त्वस्यमतंप्राक् संस्थया स्थितिः ।

श्वासो भूयान् कदाचित्स्याद्भ्रमन्याः क्षुद्रता तथा ॥६
पूर्वरूपं बिना व्याधि सहसैव प्रकाशते ।
ग्रीवास्तम्भः शिरंशूलं कदाचिच्चलचित्तता ॥ ७ ॥

इति अचलवातनिदानम् ।

---

## अथ क्लोम रोग निदानम् ।

क्लोमलक्षणम्-अधस्तु दक्षिणे भागे हृदयात्क्लोम तिष्ठति ।
जलवाहिशिरामूलं तृष्णाच्छादनकृन्मतम् ॥ १ ॥
निदानम्-तच्चातिस्निग्धगुरुभिः भोज्यैरत्यर्थशीलितैः ।
अभिघातादिभिश्चापि याति वृद्धिश्च मार्दवम् ॥ १ ॥
तथा शोणितसङ्घातः विद्रधिश्चापि जायते ।
अन्ये च दारुणा रोगा जायन्तेऽस्मिंश्च विकृते ॥ ३ ॥
क्लोमविकृतिलिङ्गानि-उत्क्लेशः वमथुः ।
वह्नेः सादः कार्श्यञ्च पाण्डुता
भ्रमः सादश्च काठिन्यमौष्ण्यमूर्द्ध्वोदरे तथा ॥ ४ ॥

विद्रधेः विकृतौ तत्र शूलाध्मानौ तृषाधिका ।
अश्मरीवच्छिला घोरा सुकष्टा तत्र जायते ॥ ५ ॥

इति क्लोमरोगनिदानम् ।

---

## अथ लसीका मेहनिदानम् ।

मधुरातिगुरुक्लिन्नव्युष्टाभिष्यन्दिभोजनात् ।
आनूपमत्स्यमांसादिभक्षणाद्बहुभक्षणात् ॥ १ ॥
शारीरश्रमहीनानां मनसोऽतिपरिश्रमात् ।
कारणैरेभिरन्यैश्च यकृत् पाकाशयस्तथा ॥ २ ॥
दूषितौ वृक्कयोः मूत्रकोषे च नयतः क्षतम् ।
तस्माद्धि मूत्रमार्गेण तरलं शोणमिश्रितम् ॥ ३ ॥
सलसीकं समेदस्कं जतूकजल सन्निभम् ।
मूत्रं प्रवर्तते स्थूलं सूत्रवद्वा क्वचिद्घनम् ॥ ४ ॥
दोषदूष्यविशेषेण वृद्धिह्रासौ च लक्षयेत् ।
तथा वर्णविशेषञ्च ज्ञात्वा कुर्यात् क्रियाक्रमम् ॥ ५ ॥

वातादिभेदन

वातोपसृष्टे मूत्रं स्यात् सशोणं चाम्लगन्धिकम् ।
मलावरोधः सन्धीनां विश्लेषश्चैव जायते ।। ६ ।।
मुहुः प्रवर्तते मूत्रमग्निक्षाजल सन्निभम् ।
मलावरोधः सन्धीनां विश्लेषश्चैव जायते ।। ७ ।।

पित्तजस्य लक्षणम्—

घनं पूतियुतं दुर्गन्धं पैत्तिके मतम् ।
मुखस्य रसहीनत्वं दाहश्च पाणिपादयोः ।। ८ ।।

श्लैष्मिकस्य लक्षणमाह—

श्लेष्मोपसृष्टे मूत्रं शुक्लं स्वच्छतरं भवेत् ।
रात्रौ पर्युषितं मूत्रमुपर्य्यच्छमधोघनम् ।
कटिवंक्षणपीडा स्याद्भक्तद्वेषश्च जायते ।। ९ ।।

द्वित्रिदोषजस्य लक्षणमाह—

द्वित्रिदोषोद्भवे तत्र मिश्रं लक्षणमुच्यते ।

साध्यासाध्यलक्षणमाह—

यूनां बलवतां प्रायः नवोत्थः साध्य उच्यते ।

दुर्बलानां तु वृद्धानां चिरोत्थोऽसाध्य एव सः ॥ ११ ॥
कदाचिद्बलमारूढः पथ्याचारैः प्रशाम्यति ।
प्राप्तोत्थानः पुनः कालान्नयत्येव यमालयम् ॥ १२ ॥
इति लसीकामेहनिदानम् ।

---

## अथ ओजोमेहनिदानम्

वह्निमान्द्यामवाताभि घाताजीर्णादिभिस्तथा ।
विषमज्वर शोफैश्च क्षयकासादिभिस्तथा ॥ १ ॥
वृक्कयोः लोहितस्रोतोविक्रियादस्रदोषतः ।
लसीकावीर्यपूयास्रैः दुष्टे मूत्रे नृणां तथा ॥ २ ॥
गर्भकाले स्त्रिया द्रव्यैः मधुरौजस्करैस्तथा ।
कषायकटुकक्षारवर्जितैः पानभोजनैः ॥ ३ ॥
वहुशः पर्युषितान्नसेवनादति भोजनात् ।
दूषितस्याम्भसः प्रायः स्नानपानावगाहनात् ॥ ४ ॥
अन्यैश्च कारणैः स्वैः स्वैः दूषितादोजसो भवेत् ।
ओजोमेहः स वै दृष्टः वर्णायुर्बलनाशनः ॥ ५ ॥

अस्य लक्षणमाह—

ओजो विकारमायातं हंसाण्डोज्ज्वल भागवत् ।
मूत्रमार्गेण निर्याति श्वैत्यं तण्डुलपिष्टवत् ॥ ६ ॥

साध्यासाध्याधिकमाह—

मेदःक्षयो भवेत्तत्रकृच्छ्रसाध्यश्च स स्मृतः ।
ज्वरारोचकशोथाग्निमांद्यैः सिद्धयति नैव सः ॥ ७ ॥

इति ओजोमेहनिदानम् ।

————

## अथ शुक्रमेहनिदानम् ।

योऽवशी कुरुते मूढोऽविधिना रेतसः क्षयम् ।
शुक्रमेहो भवेत्तस्य गदस्त्वत्यन्तदारुणः ॥ १ ॥

शुक्रमेहस्य लक्षणमाह—

वर्चोमूत्रातिवेगेन कन्दर्पस्यातिवेगतः ।
रेतश्च्युर्तिभवेत्कान्ताविलासस्मरणादपि ॥ २ ॥
स्वप्नेऽपि कामिनीभोगानुभवादपि संपतेत् ।

तन्द्रायां शयने वापि स्खलत्येव हि मानवः ॥ ३ ॥

त्रिवारं वा चतुर्वारं दिवारात्रौ पतेत् क्वचित् ।

एवं रूढगदो मूढः ध्वजशैथिल्यमेति सः ॥ ४ ॥

न शक्नुयान्मर्दयितुं कदाचिन्मदं

स्मरस्मेरविलासिनीनाम् ।

पतद्ध्वजस्तीव्रविषादयुक्तः

कदाचिदिच्छेन्मरणं विरक्तः ॥ ५ ॥

शुक्रमेहोपद्रवानाह—

कोष्ठावरोधः शिरसश्च घूर्णनं

वह्नेर्विनाशस्त्वतिसार एव ।

ह्रासश्च दृष्टेर्ननु नीलिमा

दृशोरजीर्णमेते प्रभवन्त्युपद्रवाः ॥ ६ ॥

इति शुक्रमेहनिदानम् ।

———

# अथ ध्वजभङ्ग (क्लैव्य) निदानम् ।

अथ क्लैव्यस्य लक्षणम्—

क्लीवः स्यात् सुरताशक्तस्तद्भावः क्लैव्यमुच्यते ।
अन्यच्च—न मूत्रं फेनिलं यस्य विष्ठा चाप्सु निमज्जति ।
मेढ्रश्चोन्मादशुक्राभ्यां हीनः स क्लीव उच्यते ॥ १ ॥

अथास्य निदानसम्प्राप्त्यादिकमाह—

तैस्तैर्भावैरहृद्यैस्तु रिरंसोर्मनसि क्षते ।
ध्वजः पतत्यधो नृणां क्लैव्यं समुपजायते ।
तच्च सप्तविधं प्रोक्तम्—

क्रमशः लक्षणान्याह—

लक्षणं तस्य कथ्यते ।

मानसं क्लैव्यम्—

द्वेष्यस्त्रीसम्प्रयोगाच्च क्लैव्यं तन्मानसं स्मृतम् ।

पित्तजं क्लैव्यम्—

कटुकाम्लोष्णलवणैरतिमात्रोपयोजितैः ।
पित्ताच्छुक्रक्षयो दृष्टः क्लैव्यं तस्मात् प्रजायते ॥

शुक्रक्षयजं क्लैब्यम्—

अतिव्यवायशीलो यो न च वाजीक्रियारतः ।
ध्वजभङ्गमवाप्नोति स शुक्रक्षयहेतुकम् ॥

मेढ्ररोगजं क्लैब्यम्—

महता मेढ्ररोगेण चतुर्थी क्लीवता भवेत् ।

उपघातजं क्लैब्यमाह—

वीर्यवाहिशिराछेदात्पञ्चमं तूपघातजम् ।

शुक्रस्तम्भजं क्लैब्यम्—

बलिनः क्षुब्धमनसो निरोधाद्ब्रह्मचर्यतः
षष्ठं क्लैब्यं स्मृतं तत्तु शुक्रस्तम्भनिमित्तजम् ॥

सहजं क्लैब्यम्—

जन्मप्रभृति यत्क्लैब्यं सहजं तद्धि सप्तमम् ।

साध्यासाध्यत्वमाह—

असाध्यं सहजं क्लैब्यं मर्मच्छेदाच्च यद्भवेत् ।

इति ध्वजभंगा ( क्लैब्य ) धिकारः ।

———

# अथ औपसर्गिकमेहनिदानम् ।

औपसर्गिकमेहश्च पूयमेहस्तथैव च ।
तथैवागन्तुकश्चापि व्रणमेहोऽपि कथ्यते ॥ १ ॥

सम्प्राप्तिमाह—

क्लिन्नयोनिः ऋतुमती बहुभुक्ता तथैव या ।
कामान्धस्तत्र गमनाद्गदमाप्नोति दारुणम् ॥ २ ॥
( मूत्रनाड्यन्तरस्थाना त्वगस्य श्लेष्मवाहिनी ।
व्रणिताऽवाहरेत् क्लेदं व्रणमेहः स उच्यते ॥ ३ ॥

अस्य लक्षणान्याह—

व्यवायकालमारभ्य काले सप्तनिशामिते ।
कदाचिदपि जायेत तीव्रवेदनलक्षणः ॥ ४ ॥
मुहुर्मुहुः ध्वजोत्थानं कण्डः शिश्नाग्रतस्तथा ।
असह्या वेदना चापि मूत्रकाले प्रजायते ॥५ ॥
स्फीतोपस्थः लोहिताग्रः मुष्कौ वा वेदनान्वितौ ।
पूयप्रवर्तनं मेढ्राद् व्रणवत् सम्प्रजायते ॥ ६ ॥

रक्तपिप्पलिकालिप्तं शिश्नाग्रं तस्य लक्ष्यते ।
दिवानिशं दाहयुक्तो न शान्तिमधिगच्छति ॥ ७ ॥
कदाचित्पूयसंशोषान्मूत्रमार्गो निरुध्यते ।
द्विधारं घोरदाहेन तदा मूत्रं प्रवर्तते ॥ ८ ॥
सततं मूत्रमार्गो वा क्लिन्नश्चिमचिमान्वितः ।
स्रवेच्च तनुमास्रावं क्रमशश्च प्रवर्द्धयेत् ॥
इत्ययं दारुणो व्याधिः संसर्गाज्जायते नृणाम ॥ ९ ॥
कालो गच्छन् व्यथां लघ्वीं रोगश्च दुष्प्रतिक्रियम ।
कुर्याद्, आमाक्षिरोगाद्या ज्ञेयाश्चास्य ह्युपद्रवाः ॥१०॥

इति औपसर्गिकमेहनिदानम् ।

---

## अथ पारदविकारनिदानम् ।

दोषहीनः यदा सूतस्तदा मृत्युज्वरापहः ।
शुद्धोऽयममृतः साक्षाद्दोषयुक्तो रसो विषम ॥ १ ॥
विधिना सेवितः सूतः निहन्ति सकलान् गदान् ।
तस्य मिथ्योपयोगेन जायन्ते बहवो गदाः ॥ २ ॥

विधिहीनसेवितपारदविकारमाह—

नासाभङ्गः पीनसश्च द्विजपातः शिरोऽव्यथा ।
भगन्दरो विसर्पश्च मुखनेत्रामयास्तथा ॥ ३ ॥
कोठः कण्डू विवर्णत्वं नासादो विक्षतं तथा ।
कुष्ठोपदंशलिङ्गानि दृश्यन्ते विविधानि च ॥ ४ ॥
ग्रन्थिवच्च सरुक् शोफः काठिन्यं चाण्डकोषयोः ।
पक्षाघातामवातौ च दाहश्चास्थ्नां तथैव हि ।
जाड्यं चेतोविकारश्च जायन्त्येते तथापरे ॥ ५ ॥

इति पारदविकारनिदानम् ।

---

## अथ आगन्तुजपक्षवधनिदानम् ।

द्विधा पक्षवधो ज्ञेयः दोषागन्तुनिमित्ततः ।
आगन्तुजं प्रवक्ष्यामि पूर्वं प्रोक्तस्तु दोषजः ॥ १ ॥
अस्य त्वागन्तुजस्यापि कारणद्वयमुच्यते ।
आद्योऽयं रससम्भूतः, द्वितीयः फणिजः स्मृतः ॥ २ ॥

पादरजः—

सततं रससंस्पर्शात् तद्धूमस्य च सेवनात् ।
पक्षाघातो भवेद्यस्तु स विज्ञेयः रसोद्भवः ॥३॥

तस्य लक्षणम्—

बाह्वोर्बलक्षयः पूर्वं पश्चात्कम्पश्च जायते ।
सक्थ्नोश्च वेपनं पश्चात्ततः सर्वशरीरजम् ॥४॥
यत्नवानपि नो शक्तः द्रव्यं धारयितुं दृढम् ।
भाषितुं चर्वितुं चापि, नृत्यन्निव च गच्छति ॥५॥
निद्राधिक्यं ततस्तस्य प्रलापोऽथ बलक्षयः ।
अग्निमांद्यमथोत्क्लेशः लालास्रावो द्विजच्युतिः ।
शान्तिर्भवति कम्पस्य धारितेऽङ्गे करादिभिः ॥६॥

अथ नागजस्य कारणानि—

शिल्पिनः ये प्रकुर्वन्ति चित्राणि प्रायशो नगैः ।
येषां वा व्यवहारे स्यात्प्रायशो नागवर्तनम् ॥७॥
अन्ये च ये भक्षयन्ति शुद्धिहीनं मृतं नगम् ।
तेषान्तु जायते प्रायः पक्षाघातो हि नागजः ॥८॥

अथास्य लक्षणानि—

अंगुलीभ्यः समारब्धः मणिबन्धं ततोऽखिलम् ।
गदोऽधितिष्ठति तत्र दौर्बल्यं जायते महत् ॥९॥
तोदश्चांसे प्रकोष्ठे च बाह्वोश्च स्रंसनं तथा ।
नीलत्वं दन्तवेष्टस्य शूलं चिह्नानि चास्य वै ॥१०॥

इति आगन्तुजपक्षवधनिदानम् ।

——

## अथ शीर्षाम्बुरोगनिदानम् ।

शिर्षाम्बुरोगस्य निदानसम्प्राप्त्यादिकमाह—

सुरातिपानादतिशैत्यतश्चाप्यसात्म्यभोज्याच्च दुरम्बुपानात्
वायोः प्रदोषादभिघाततश्च तथान्त्रमध्ये क्रिमिसम्भवाच्च ॥
शिरास्थितस्नेहवृत्तौ क्रमेण सञ्चीयते तत्र प्रभूतमम्बु ।
शीर्षाम्बुरोगः कथितो भिषग्भिर्भवत्यसौ कृच्छ्रतरोपचारः॥
बाल्ये च प्रायशो रोगः विविधाहितसेवनात् ।
दन्तोद्भेदे शिशूनां वै बाहुल्येनाभिजायते ॥३॥

तस्य पूर्वरूपमाह—

जिह्वावृताऽति निद्रत्वं दौर्बल्यं गाढविट्कता ।
पूतिनिश्वासता चास्मिन् भवन्त्येते भविष्यति ॥४॥

लक्षणम्—

शिरसो वेदना तीव्रा कृष्णविट्त्वाल्पमूत्रते ।
श्रुतौ नेत्रे च तैक्ष्ण्यं स्यान्नाडी वेगवती भवेत् ॥५॥
त्वचि रौक्षोष्णते छर्दिर्विषमा च कनीनिका ।
विवर्णमुखता चैव निद्रायां द्विजघर्षणम् ॥६॥
कण्डूरोष्ठस्य नासाया आक्षेपो रक्तनेत्रता ।
पक्षाघातः प्रलापश्च शीर्षाम्बुगदलक्षणम् ॥७॥

इति शीर्षाम्बुरोगनिदानम् ।

## अथ मस्तिष्करोगनिदानम् ।

### मस्तिष्क—कम्पस्य निदानम् ।

मूर्ध्न्यभिहते तैस्तैः प्रतिघातैः शरीरिणाम् ।
मूर्च्छा हृल्लासवमनं जडत्वं चलचित्तता ॥१॥

दौर्बल्यं वेपथुः कर्णनादश्च मलिनास्यता ।
विस्तारतारिकायाश्च नाडीस्पन्दनमल्पशः ॥२॥
शीतत्वं स्याच्छरीरस्य वाग्विकारश्च जायते ।
पक्षहानिस्तथा यस्मिंस्तमाहुः शीर्षवेपनम् ॥३॥

इति मस्तिष्ककम्पनिदानम् ।

## अथ मस्तिष्कचयापचयनिदानम् ।

अथास्य निदानादिकमाह—

स्वभावतो वा सौभाग्यान् मस्तुलुङ्गः प्रवर्द्धते ।
कपालमथ बालानां यूनाञ्चापि कदाचन ॥१॥
यदि वृद्धिः समाना स्यात् मस्तुलुङ्गकपालयोः ।
तदा तत्र विकाराणां प्रायशो न भयं भवेत् ॥२॥
स्वावस्थिते कपाले चेन्मस्तिष्कं सम्प्रवर्द्धते ।
तदा ह्युपद्रवाः घोरा जायन्ते तन्निपीडनात् ॥३॥

उपद्रवानाह—

शिरोऽर्त्तिः बलहानिः स्याद्भ्रमो मूर्च्छनमेव च ।
पक्षनाशस्तथाक्षेपस्ततो मरणमेव च ॥४॥

मस्तिष्कह्रासमाह—

यथा मस्तिष्कवृद्धिः स्यात्तथा ह्रासोऽपि जायते ।
कपाले वर्द्धमानेऽपि स ह्रासोऽपि भयङ्करः ॥५॥
एकपार्श्वे यदा ह्रासो न तदा प्राणसंशयः ।
लुङ्गस्य परितो ह्रासात् सद्यः प्राणाद्विमुच्यते ॥६॥
मस्तिष्कस्य भवेद् वृद्धिः प्रायशो मरणाय वै ।
एवं त्वपचयोऽप्यस्य प्रायशो मरणाय वै ॥७॥
तत्र वैयर्थ्यमाप्याति भैषज्यपरिकल्पनम् ।
तथापि तत्र योक्तव्यं भेषजं यद्रसायनम् ॥८॥

इति मस्तिष्कचयापचयनिदानम् ।

## अथ अंशुघातनिदानम् ।

तस्य निदान लक्षणम्—

चण्डांशोश्चण्डकिरणैस्तप्ते मूर्ध्नि प्रजायते ।
अंशुघाताभिधो व्याधिर्देहिनां देहमर्द्दनः ॥
पादत्रछत्रहीनानां ग्रीष्मचण्डांशुसेविनाम् ।

कारागारनिबद्धानां सैनिकानाञ्च जायते ॥

अथास्य लक्षणानि—

तृष्णा तीव्रतरा मूर्च्छा भ्रमश्चारक्तनेत्रता ।
हृल्लासो वमनं मूत्रवेगोऽथ विषमा धरा ॥
त्वचि रौक्ष्यं स्पर्शहानिराक्षेपश्च प्रजायते ।
एवमाद्यानि जायन्ते लक्षणानि विशेषतः ॥

अरिष्टलिंगानि—

क्षणाद्विलुप्यते नाडी नीलत्वं हस्तपादयोः ।
आक्षेपश्चैव गात्राणां मरणायांशुघातिनः ॥

इति अंशुघातनिदानम् ।

——

## अथ योषापस्मारनिदानम् ।

निदानम्—

देहे रक्तक्षयाद्वाथ तदाधिक्यादजीर्णतः ।
कोष्ठबन्धान्मनोनाशादुद्वेगादथ शोकतः ॥१॥

पुष्पनाशाच्च नारीणां जरायुविकृतेस्तथा ।
दौर्बल्यादथ नैष्ठुर्याद्धृतुरप्रणयात्तथा ॥२॥
पत्युर्नाशभवाद्व्याधेः योषापस्मारसंज्ञकः ।
रोगो वै जायते घोरः मनोदेहप्रतापनः ॥३॥
योषितामेव बाहुल्याद्यत एष भवेद्गदः ।
अपस्मारसमैश्चिह्नैस्ततः संज्ञेयमीदृशी ॥४॥
कालात्पुष्पोद्भवादर्वाक्पुष्पनाशादथो परम् ।
नैव सञ्जायते व्याधिः, मध्यः कालः सुनिश्चितः ॥५॥

अथास्य प्रागूपम्—

हृदये पीडा जृम्भा सादोऽङ्गानां तथा च चित्तस्य ।
योषापस्मारगदे सन्ति हि लिङ्गानि पूर्वजातानि ॥६॥

रूपम्—

वैचित्त्यं विभ्रान्तिर्बुद्धेर्हास्यञ्च रोदनञ्चापि ।
प्रलपनमुच्चैः क्रोशः ज्योतिर्द्वेषस्तथा भ्रान्तिः ॥७॥
श्वासे कृच्छ्रत्वं स्यादौद्धत्यं कण्ठकोष्ठयोः पीडा ।
अथ प्राबल्यं शक्तेः स्पर्शोत्थायाः सदाङ्गपीडास्यात् ॥८॥

वर्तुलवातोद्गारा उदरादुत्थाय कण्ठमायान्ति ।
उद्वेष्टनमङ्गानां मूर्च्छा चक्षुर्विवर्तनं फेनः ।
योषापस्मारेऽस्मिल्लिँङ्गान्येतानि जायन्ते ॥६॥

इति योषापस्मारनिदानम् ।

——

## अथ योनिव्यापत्सु बाधकरोगनिदानम् ।

वाधकभेदानाह—

रक्तमाद्री तथा षष्ठ्यङ्कुरो जलकुमारकः ।
वाधका इति चत्वारः प्रजाननवाधकाः ॥१॥

रक्तमाद्रीलक्षणम्—

व्यथा कट्यां तथा नाभेरधः पार्श्वे स्तनेऽपिच ।
रक्तमाद्री प्रदोषेण फलहीना तदा भवेत् ॥२॥
मासमेकं द्वयंवापि ऋतुयोगो भवेद्यदि ।
रक्तमाद्री प्रदोषेण फलहीना तदा भवेत् ॥३॥

षष्ठीलक्षणम्—

नेत्रे हस्ते भवेज्ज्वाला योनौ चैव विशेषतः ।
लालासंयुक्तरक्तश्च षष्ठीवाधकयोगतः ॥४॥
मासैकेन भवेद्यत्र ऋतुस्नानद्वयं तथा ।
मलिना रक्तयोनिः स्यात् षष्ठी वाधकयोगतः ॥५॥

अङ्कुरलणम्—

उद्वेगो गुरुता देहे रक्तस्रावो भवेद्बहुः ।
नाभेरधो भवेच्छूलं चाङ्कुरः स तु वाधकः ॥६॥
ऋतुहीना चतुर्मासं त्रिमासं वा भवेद्यदि ।
कृशाङ्गो करपादे च ज्वाला चाङ्कुरयोगतः ॥७॥

जलकुमारलक्षणम्—

सशूला च सगर्भा च शुष्कदेहाल्परक्तिका ।
जलकुमारदोषेण जायते फलहीनता ॥८॥
या कृशाङ्गी भवेत् स्थूला बहुकालमृतुस्तथा ।
गुरुस्तनी स्वल्परक्ता जलकुमारदूषणात् ॥९॥

इति योनि व्यापस्तु वाधकरोगनिदानम् ।

# अथ योन्याक्षेपनिदानम् ।

योनौ वातस्त वैगुण्ये स्पर्शस्यादि प्रवृद्धता ।
विक्षेपणं योनिमुखे तत्स्पर्शे तीव्रवेदना ॥१॥
योन्याक्षेपवती नारी न सेहत रतिक्रियाम् ।
यदि गच्छेद्बलाद्भर्ता रुग्णातिव्यथा भवेत् ॥ २ ॥
भगपीडाभयाक्रान्ता भर्त्तारं नोपगच्छति ।
एवं तिरस्कृता दुःखात्कदाचिन्मर्तुमिच्छति ॥ ३ ॥

अथास्य लक्षणानि—

अग्निमान्द्यमथोद्वेगः निद्राल्पत्वं तथा क्रमात् ।
बस्तौ दाहः व्यथा पृष्ठेऽशक्तिश्चंक्रमणेऽपि च ॥ ४ ॥
वैवर्ण्यमथ दौर्बल्यं तथोत्साहस्य संक्षयः ।
योन्याक्षेपगदस्यैताः प्रोक्ता आकृतयो बुधैः ॥ ५ ॥

इति योन्याक्षेपनिदानम् ।

— —

# अथ योनिकण्डूनिदानम् ।

योनौबलासवैगुण्याद् जरायुविकृतेस्तथा ।
अर्शसां कोपतश्चापि बस्तौ जातेऽर्बुदे तथा ॥ १ ॥
योनेः सिराणां प्रसृतेः वातलाश्चैव योषितः ।
रजःप्रवृत्तिसमये पुरुषेणातिसङ्गमात् ॥ २ ॥
गर्भप्रागुद्भवे चापि योनौ कण्डूः प्रजायते ।
विशेषतस्तु नारीणां वार्धक्य एव जायते ॥ ३ ॥

योनिकण्डू-लक्षणम् ।

योनौ कण्डूश्च तोदश्च रौक्ष्यं शुष्कत्वमेव च ।
योनिकण्डूगदस्यैतल्लक्षणं भिषजो विदुः ॥
उष्णानुपशयो व्याधिः शीतोपशय एव च ॥ ४ ॥

इति योनिकंण्डूनिदानम् ।

# अथ शैशवसन्न्यास निदानम् Cunvulsion

दूषितपयसः पानान्नित्यं शीतेऽन्धकारपूर्णेच ।
वातातपरहिते वा दुर्वातैः दूषिते गृहे वासात् ॥ १ ॥

दन्तोद्भेदगदे वा क्रिमिव्याधौ वाथ बद्धकोष्ठे वा ।
कुक्कुटकासगदे वा त्वभिघाते वाऽन्यकष्टदे व्याधौ ।। २।।
मिथ्याहारविहारैः बहुदोषैः पीड्यते यदि हि ।
शैशवसन्यासोऽसावुक्तो बातङ्कपीडको बहुधाः ।। ३ ।।
उत्तारे नयने स्तः गात्रेष्वाक्षेपकोऽथ जायते ।
संज्ञाहीनो मृत इव पतित दृढ़ा दन्तपंक्तिश्च ।। ४ ।।
शैशवसन्न्यासोऽयं भवति शिशूनां हि बाधकः प्रायः ।
सद्यःफला चिकित्सा रेचनमपि शस्यते विशेषेण ।। ५ ।।

इति शैशवसन्न्यासनिदानम् ।

— —

# अथ वृक्करोगनिदानम् ।

वृक्कस्य पूर्वरूपाण्याह —

निद्राहानिरग्निमान्द्यंशोफोऽक्ष्यास्यपदेषु च ।
नाडी वेगवती स्तब्धा चोष्णा त्वग्रौक्ष्यमेव च ।
प्राग्रूपं लक्षयेद्वैद्यः वृक्करोगातुरस्य वै ।। १ ।।

वृक्कामयस्य लक्षणान्याह—

रक्तह्रासात्पाण्डुवर्णमास्यं वह्नेश्च मन्दता ।
स्वेदाभावस्त्वचि रौक्ष्यं नाडी वेगवती भवेत् ।
वृक्कस्थाने तथा कट्यां पीडा तीव्रतरा भवेत ।
मुहुःसपीडमुष्णञ्च मूत्रं स्रवति विन्दुशः ॥ २ ॥
वृक्कयोरश्मरीयोगात् कदाचित्तीव्रलक्षणम् ।
मूत्रं शोणितयुक्तं स्याच्छैत्यञ्च पाणिपादयोः ॥ ४ ॥
मूत्रकाले ध्वजाग्रे वै किञ्चिद्दाहश्च लक्ष्यते ।
वृक्कयोः कार्यशैथिल्याद्यकृत्प्लीहहृदां तथा ॥ ५ ॥
विकारो दृश्यते घोरः स्वस्वसंवैद्यलक्षणः ।
श्रुतिनादोऽक्षिदोषश्च मूर्च्छा भङ्गो ध्वजस्य च ।
शिरोग्रीवांसपीडा स्यादेवमन्यच्च लक्षयेत् ॥ ६ ॥

इति वृक्करोगनिदानम् ।



# रोगोंका कोष

### अर्थात्

## आयुर्वेदोक्त रोगोंके दो भाषाओंमें नाम

| ( आयुर्वेदोक्तनाम ) | ( अङ्गरेजी उच्चारण ) | अङ्गरेजी भाषानाम |
| --- | --- | --- |
| ज्वर | फीवर | Fever |
| आगन्तुक | एक्सिडेन्टल एण्ड सरजी-कल फीवर | Accidental and Surgical fever |
| सन्निपातज्वर | टाईफाईड फीवर | Typhoid, Typres |
| विषमज्वर | ईन्टरमीटंट् फीवर | Intermitantfever |

| | | |
|---|---|---|
| संन्ततज्वर | मेलेरियल रीमीटण्ट फीवर | Malarial Remitant fever |
| सततज्वर | डबल रीमीटण्ट फीवर | Continued fever Double Quotidian fever |
| अन्येद्युष्क० | कोटीडीयन फीवर | Quotidian fever |
| तृतीयक० | टर्शीयन फीवर | Tertian fever |
| चातुर्थक० | कोर्टन फीवर | Quarten fever |
| चातुर्थकविपर्यय० | डबल कोर्टन फीवर | Double quarten fever |
| वातबलासक० | ० | ० |
| प्रलेपक० | ट्रोम्याटिक फीवर | Traumatic fever |
| अभिघात० | ईन्फ्लेमेटरी फीवर | Inflammatory fever |

| | | |
|---|---|---|
| विदाह० | ईन्फ्लेमेटरी फीवर | Inflammatory fever |
| सूतिका० | प्युर्पिरल फीवर | Perprual fever |
| स्तन्योत्थ० | मिल्क फीवर | Milk fever |
| अतिसार | डायेरिया | Diarrhoea |
| आमातिसार | म्युको कोलाईटीस | Muco-colitis |
| रक्तातिसार | ब्लडी डायेरिया | Bloody diarrhoea |
| प्रवाहिका | डीसेन्ट्री | Dysentery |
| ग्रहणी | स्प्रु० क्रोनीकलाएन्टरिक डायेरिया | Sprue Chronic Lienteric Diarrhoea |
| अर्श | पाईल्स | Piles |
| रक्तार्श | ब्लीडींग पाईल्स | Bleeding piles |

| | | |
|---|---|---|
| मेढ्ज्रादिअर्श | पालीपस औफ इअर नोज़ आई | Polypus of ear nose, eye etc. |
| चर्मकील | वार्ट्स | Warts |
| अग्निमान्द्य | लौस औफ एपीटाइट | Loss of appetite |
| अजीर्ण | इन्डीजेशन | Indigestion |
| विसूचिका | कोलेरा | Cholera |
| अलसक | लीचेन | Lichen |
| विलम्बिका | ० | ० |
| आध्मान | टीम्पेनाइटीस् | Tympanities |
| कृमि | वर्म्स इन्टेस्टीनल | Worms Intestinal |
| पाण्डु रोग | एनीमिआ | Anaemia |

| | | |
|---|---|---|
| कामला | जौन्डीस | Jaundice |
| हलीमक | क्लोरोसिस | Cholorosis |
| रक्तपित्त | इन्टरनल हेमओरेजीस् | Internal Ham-orrages |
| राजयक्ष्मा | टयुबरक्युलोसीस कन्जम्पशन | Tuberculosis Consumption |
| उरःक्षत | पलमोनरीटयुबरक्युलो सीस | Pulmonary |
| कास | काफ | Cough |
| हिक्का | हीकप् | Hiccup |
| श्वास | अस्थमा | Asthma |
| स्वरभङ्ग | होर्सनेस | Hoarseness |

| | | |
|---|---|---|
| अरोचक | ऐनोरेकासिया | Anorexia |
| छर्दि | वोमीटिंग | Vomiting |
| तृष्णा | थर्स्ट | Thirst |
| मूर्छा | सींकोप | Syncope |
| भ्रम | गीडीनेस | Giddiness |
| संन्यास | एपोप्लेक्षी | Appoplexy |
| मदात्यय | आलकोलीशम | Alcoholism |
| दाह | बर्निङ्ग औफ बाडी | Burning of Body |
| उन्माद | मेनीया इन्सेनीटी | Mania, Insanity |
| अपस्मार | एपीलेप्सी | Epilepsy |
| आक्षेपक | कन्वलशन | Convulsions |

| | | |
|---|---|---|
| धनुःस्तम्भ | टीटेनस | Tetanus |
| पक्षवध, पक्षाघात | हेमीप्लेजिया | Hemiplegia |
| अर्दित | फेशीअल पेरालिसीस | Facial paralysis |
| वाह्यायाम | ओपिस्थोटोनिस् | Opisthotonus |
| अंतरायाम | एम्प्रोस्थोटोनिस् | Emposthotonus |
| हनुग्रह | डीसलोकेशन औफ दी लोअर जा | Dislocation of the lower jaw |
| मन्यास्तम्भ | टोर्टीकोलिस्-राईनेक | Torticollis, Wryneck |
| जिह्वास्तम्भ | ग्लोसल पाल्सी आर पेराली-सीस औफ टंग | Glosal palsy or Paraly-sis of tongue |
| सिराग्रह | ० | ० |

| | | |
|---|---|---|
| अपतानक | हिस्टीरिया मेजर | Hysteria Major |
| गृध्रसी | सायटीका | Sciatica |
| विश्वाची | आर्म पाल्सी | Arm palsy |
| क्रोष्टुशीर्षक | साईनोवाईटीस् औफ दी नी जोईंट | Synovitis of the knee-joint |
| पङ्ग, खञ्ज | पाराप्लेज़ीया | Paraplegia |
| पादहर्ष | एनीस्थेसिआ | Anæsthesia |
| अंसशोष | ओस्टीओ आरथ्राईटीज़ औफ शोल्डर जोईंट | Osteo-arthritis of Shoulder joint |
| अपबाहुक | स्टीफनेस औफ शोल्डर जोईंट | Sitiffness of shoulder joint |

| | | |
|---|---|---|
| मूकत्व | डम्नेस् | Dumbness |
| तूनी | | |
| प्रतितूनी | | |
| ष्ठीला | ० | ० |
| प्रत्यष्ठीला | ० | ० |
| वेपथु ( कंपन ) | प्यारालीसीस एजीटन्स | Paralysis agitans |
| खल्ली | ० | ० |
| ऊर्ध्ववात | ० | ० |
| अभुक्तवात | ० | ० |
| अपतन्त्रक | हिस्टीरिया माईनर | Hysteria minor |

| | | |
|---|---|---|
| ओष्ठ भेद | चौपींग औफ लीप | Chopping of lip |
| दन्त भेद | ० | ० |
| नख भेद | ओनीकिया | Onychia |
| अरसज्ञता | लोस औफ टेस्ट | Loss of taste |
| घ्राणनाश | लौस औफ सेन्स औफ स्मेल | Loss of sense of smell |
| वातरक्त | गाउट | Gout |
| जृम्भा | योनींग | Yauning |
| उरुस्तम्भ | पेरेलीसीस | Paralysis |
| अस्वप्न निद्रानाश | इन्सोम्नीया | Insomnia |
| आमवात | रेमेटीज़म् | Rheumatism |
| अतिप्रलाप | डेलीरियम | Delirium |

| | | |
|---|---|---|
| शूल | कोलिक | Colic |
| आमशूल | o | o |
| परिणामशूल | o | o |
| उदावर्त | जनरल ओबस्ट्रक्शन औफ | General obstruction of |
| | सिक्रेशन एन्ड एक्षक्रिशन | Secretion and excretion |
| आनाह | इन्टेस्टीनल ओबस्ट्रक्शन | Intestinal obstruction |
| गुल्म | एब्डोमीनल टच्युमर | Abdominal tumour |
| रक्तगुल्म | ओवेरीयन टच्युमर | Ovarian tumbour |
| हृद्रोग | हर्टडीज़ीज़ | Heart disease |
| मूत्रकृच्छ्र | डीस्यूरीया | Dysuria |
| मूत्राघात | डीस्यूरिया | o |

| | | |
|---|---|---|
| वातकुण्डलिका | स्पस्मोडिक स्ट्रीक्चर | Spasmodic Stricture |
| अष्ठीला | एनालार्जमेंटओफप्रोटेस्ट | Enlargement of Proatest |
| वातबस्ति | रीटेन्शन ओफ युरिन | Retention of Urine |
| मूत्रातीत | इन्कोन्टीनेन्स | Incontinence |
| मूत्रजठर | डीस्टेन्डेड ब्लाडर | Distended bladder |
| मूत्रोत्संग | स्टीकचर ओफ युरेथ्रा | Stricture of Urethra |
| मूत्रक्षय | सप्रेशन आफ यूरिन | Suppression of urine |
| मूत्रग्रंथि | ट्यूमर ओफ ब्लाडर | Tumour of bladder |
| मूत्रशुक्र | ० | ० |

| | | |
|---|---|---|
| उष्णवात | ० | ० |
| मूत्रसाद | सिस्टायटिस् | Cystitis |
| विड्विघात | वेसियको इन्टेस्टायनल् फिश्चुला | Vesico-Intestinal Fistula |
| बस्तिकुण्डल | ए टनी आफ ब्लाडर | A tony of bladder |
| अश्मरी | क्येल्क्युलस | Calculus |
| शर्करा | ग्रेवल | Gravel |
| प्रमेह | डिजिज़झ् आफ युरिन | Diseases of urine |
| उदकमेह | डायाविटिस इन्सिपिडस | Diabetes Insipidus |
| मधुमेह | डायाविटिस् मेल्टिस् | ० Mellitus |
| सान्द्रमेह | ० | ० |

| | | |
|---|---|---|
| सुरामेह | ० | ० |
| पिष्टमेह | काल्यूरिया | Chylurea |
| शुक्रमेह | स्परमेटोरिया | Spermatorrhœa |
| सिकतामेह | ग्रेवल | Gravel |
| शीतमेह | ० | ० |
| शनैर्मेह | ० | ० |
| लालामेह | एलबूमेनिरिया | Alubminuria |
| क्षारमेह | ० | ० |
| नीलमेह | ० | ० |
| हारिद्रमेह | ० | ० |
| माञ्जिष्ठमेह | ० | ० |

| | | |
|---|---|---|
| रक्तमेह | हेमेटोरिया | Hæmaturia |
| वसामेह | एल्बूमेनिरिया | Alubminuria |
| मज्जामेह | ० | ० |
| क्षौद्रमेह | ० | ० |
| हस्तिमेह | एन्युरेसिस | Anuresis |
| प्रमेहपिड़का | कार्बन्कल | Carbuncle |
| मेदोवृद्धि | ओबेसिटी | Obeysity |
| प्लीहोदर | स्प्लीनायटिस | Splennitis |
| क्षतोदर | अलसरेशन ओफ दि बावेल | Ulceration of the howel |
| जलोदर | एसायटिस | Ascites |

| | | |
|---|---|---|
| यकृदाल्युदर | हेपेटाईटिस | Hepatitis |
| शोथ | ड्रोप्सी | Dropsy |
| दोषजवृद्धि | ओरकायटीस | Orchitis |
| रक्तजवृद्धि | हिमेटोसिल | Hæmatocele |
| मेदोजवृद्धि | एलिफन्टिॲसिस ऑफ स्क्रोटम | Elephantiasis of Scrotum |
| अण्ड कोष | | |
| अंडकोष वृद्धि | हाइड्रोसिल | Hydrocele |
| अन्त्र वृद्धि | हर्निया | Hernia |
| गलगण्ड | गायटर | Goitre |
| गण्डमाला | स्क्रोफ्युला | Scrofula |
| अपची | ० | ० |

| | | |
|---|---|---|
| ग्रंथि | टयूमर | Tumor |
| अर्बुद | मेलिगनन्ट ग्रोथ | Malignant growth |
| रक्तार्बुद | ब्लड ट्यूमर | Blood Tumour |
| मांसार्बुद | मायोमा | Myoma |
| मेदोर्बुद | फैटी टयूमर | Fatty Tumour |
| श्लीपद | एलिफन्टिएसिस | Elephantiasis |
| विद्रधि | एब्सेस् | Abscess |
| व्रणशोथ | इन्फ्लेमेशन आफ वुन्ड | Inflammation of wound |
| शारीरव्रण | एडियोपथिक अल्सर | Idiopathic ulcer |
| सद्योव्रण | ट्रोमेटिक वुन्ड | Traumatic wound |

| | | |
|---|---|---|
| छिन्न | कटस | Cuts |
| भिन्न | रप्चर | Rupture |
| विद्ध | पंकचर्ड वुन्ड | Punctured wound |
| क्षत | कन्टयु स्ड वुन्ड | Contused wound |
| पिच्चित | काम्पौन्ड फ्रक्चर | Compound fracture |
| घृष्ट | एक्सकोरिएशन | Excoriation |
| अस्थिभग्न | फ्रक्चर | Fracture |
| सन्धिविश्लेष | डिस्लोकेशन | Dislocation |
| नाड़ीव्रण | सायनस् फिस्चुला | Sinus Fistula |
| भगन्दर | फिस्चुलाइन एनस | Fistula in anus |
| फिरंग | सिफलिस | Syphilis |

| | | |
|---|---|---|
| उपदंश | साफ्ट चांसर | Soft Chancre |
| लिङ्गार्श | चांसर् आफ दि पेनिस | Chancre of the Penis |
| महाकुष्ट | व्हाइट लेप्रसि | White leprosy |
| कापाल | ० | ० |
| औदुम्बर | ० | ० |
| मण्डल | ० | ० |
| ऋष्यजिव्ह | ० | ० |
| पुण्डरीक | ० | ० |
| सिध्म | क्लोआज्मा | Cloasma |
| काकणक | ० | ० |
| एककुष्ट | ० | ० |

| | | |
|---|---|---|
| चर्माख्यकुष्ठ | झेरोडर्मा | Zeroderma |
| किटिभ० | सोरायसिस् | Psoriasis |
| वैपादिक० | हेजेड्स | Rhajades |
| अलसक० | लीचेन् | Lichen |
| दद्रु | रिंगवर्म | Ringworm |
| चर्मद | ० | ० |
| पामा | एग्झीमा | Eczema |
| कच्छु | स्केडीस-इच | Scabies, Itch |
| शतारुकुष्ठ | रपिया | Rupia |
| विचर्चिका | पेंफिगस् | Pemphigus |

| | | |
|---|---|---|
| किलास | ल्युकोडमा | Leucoderma |
| शीतपित्त | अर्टिकेरिया | Urticaria |
| अम्लपित्त | एसिडडिस्पप्सीया | Acid dyspepsia |
| विसर्प | एरिथीमा | Erythema |
| ग्रन्थिविसर्प | एरिथीमा-नोडोझम | ,, Nodosum |
| कर्दम विसर्प | फ्लेग्मोनस एरिसिपेलस | Phlegmonous Erysipelas |
| क्षतविसर्प | ट्राम्पाटिक एरिसिपेलस | Traumatic |
| विस्फोट | इम्पेटिगो | Impatigo |
| मसूरिका | स्माल पाक्स | Small pox |
| अजगल्लिका | ० | ० |

| | | | |
|---|---|---|---|
| यवप्रख्या | ० | | ० |
| अन्त्रोलज्जी | ० | | ० |
| विवृत्ता | ० | | ० |
| कच्छपिका | ० | | ० |
| वल्मीक | ० | | ० |
| इन्द्रविद्धा | | ० | ० |
| गर्दभिका | | ० | ० |
| पाषाणगर्दभ | | ० | ० |
| पनसिका | | ० | ० |
| जालगर्दभ | | ० | ० |
| हरिवेल्लिका | | ० | ० |

| | | |
|---|---|---|
| कक्षा | ० | ० |
| गन्धमाला | ० | ० |
| अग्निरोहिणी | ० | ० |
| चिप्पल | व्हिट्लो | Whitlow |
| कुनख | ० | ० |
| अनुशयी | ० | ० |
| विदारिका | ० | ० |
| शर्करार्बुद | ० | ० |
| पाददारी | ० | ० |
| कदर | ० | ० |
| अलस | कॉर्न | Corn |

| | | |
|---|---|---|
| इन्द्रलुप्त | फॉँलिंग ऑँफहेर-बोल्ड-नेस | Following of Hair, Baldness |
| दारुणक | ० | ० |
| अरुंषिका | ० | ० |
| पलित | प्रिमेच्युअरगेहेअर | Premature grey hair |
| मुखदूषिका | एक्नि | Acne |
| युवानपिडका | ० | ० |
| पद्मिनीकण्टक | ० | ० |
| जतुमणी | ० | ० |
| मसक | वार्टस | Warts |

| | | |
|---|---|---|
| तिलकालक | मोल | Mole |
| न्यच्छ | ० | ० |
| व्यङ्ग्ल | ० | ० |
| नीलिका | ० | ० |
| परिवर्तिका | प्यारा फायमोसिस् | Paraphimosis |
| अवपाटिका | ० | ० |
| निरुद्धप्रकश | फायमोसिस् | Phimosis |
| सन्निरुद्धगुद | स्ट्रिक्चर ओफधीरक्टेम् | Stricture of the rectum |
| अहिपूतना | प्रुरायटस एनाय | Pruritis anii |
| वृषणकच्छू | ० | ० |

| | | |
|---|---|---|
| गुदभ्रंश | प्रोल्याप्सस एनाय | Prolapsus anii |
| वराहदंष्ट्र | ० | ० |
| ओष्ठरोग | ० | ० |
| शीताद | ० | ० |
| दन्तपुप्पुट | ० | ० |
| दन्तवेष्ठ | ० | ० |
| शौशिर | ० | ० |
| परिदर | ० | ० |
| उपकुश | ० | ० |
| वैदर्भ | ० | ० |
| सल्लिवर्ध | एक्स्ट्रा टुथ | Fxtra tooth |

| | | |
|---|---|---|
| कराल | ० | ० |
| अधिमांस | ० | ० |
| दन्तनाडी | सायनस इन् धी गम | Sinus in the gum |
| दालन | ० | ० |
| क्रिमिदन्त | कॅरिझ ऑफ टुथ | Caries of tooth |
| भञ्जनक | ० | ० |
| दन्तहर्ष | इरिटेशन् इन् धी टुथ | Initation in tooth |
| दन्तशर्करा | टार्टर | Tartar |
| कपालिका | ० | ० |
| स्यावदन्त | ब्लॅक ओर निक्रोइड टुथ | Black or neerosed tooth |

| | | |
|---|---|---|
| दन्तविद्रधि | ० | ० |
| जिह्वारोग | ० | ० |
| अलास | ० | ० |
| उपजिह्विका | र्‍यान्युला | Ranula |
| कण्ठ शुण्डी | एलोंगेटेड युव्युला | Uvula elongated |
| तुण्डिकेरी | ० | ० |
| अव्रुष | ० | ० |
| कच्छप | ० | ० |
| तालवर्बुद | ० | ० |
| मांस संघात | ० | ० |
| तालुपुप्पुट | ० | ० |

| | | |
|---|---|---|
| तालुपाक | ० | ० |
| रोहिणी | ० | ० |
| कण्ठशालुक | ० | ० |
| अधिजिह्विका | ० | ० |
| वलय | ० | ० |
| बलास | ० | ० |
| एकवृन्द | ० | ० |
| वृन्द | ० | ० |
| शतघ्नी | ० | ० |
| गलायु | ० | ० |
| गलविद्रधि | ० | ० |

| | | |
|---|---|---|
| गलौघ | ० | ० |
| स्वरघ्न | ० | ० |
| मांसतान | ० | ० |
| विदारी | ० | ० |
| मुखपाक | स्टॉमेटाईटीस् | Stomatities |
| कर्णशूल | ओटाईटिस्, ओठ्या-लिज़या | Otitis, Otalgia |
| कर्णनाद | नोयझेस् इन् धी इअर | Noises in the ear |
| बाधिर्य | डेफनस् | Deafness |
| कर्णक्ष्वेड | ० | ० |
| कर्णस्राव | ओटोह्रिआ | Otorrhaa |

| | | |
|---|---|---|
| कर्णतूथक | ० | ० |
| कर्णप्रतिनाह | ० | ० |
| क्रिमिकर्णक | वर्म्सइन इयर | Worms in the ear |
| कर्णविद्रधि | ० | ० |
| कर्णपाक | सप्युरेशन् ईनथीइयर | Suppuration in the ear |
| पूतिकर्ण | फिटिड्डिस्चार्जफ्रोम थी ईयर | Foetid discharge from the ear |
| कर्णशोथ | इन्फ्लेमेशन ऑफथी इयर | Inflammation of ear |
| परिपोटक | ० | ० |

| | | |
|---|---|---|
| उत्पात | ० | ० |
| उन्मन्थक | ० | ० |
| परिलेहि | ० | ० |
| पीनस | ओझीन | Ozapna |
| पूतिनस्य | ० | ० |
| नासपाक | पुस्चुलईन् धीनोझ | Pustule in the |
| क्षवथु | ब्वीझींग | Sneezing |
| भ्रंशथु | ० | ० |
| दीप्त | ० | ० |
| प्रतिनाह | ० | ० |
| नासापाक | ० | ० |

| | | |
|---|---|---|
| नासास्राव | ० | ० |
| नासाशोष | ड्रायनेस आफ नोज | Dryness of nose |
| प्रतिश्याय | कटाह | Catarrah |
| नेत्ररोग | ० | ० |
| अभिष्यन्द | आप्थाल्मिआ | Ophthalmia |
| नेत्रपाक | ० | ० |
| हताधिमन्थ | ० | ० |
| अक्षिपाक | ० | ० |
| अम्लाध्युषित | ० | ० |
| सिरोत्पात | पानस | Pannus |
| सिराप्रहर्ष | ० | ० |

| | | |
|---|---|---|
| शुक्ल, | कार्नियल अलसर | Corneal ulcer |
| अजकाजात | ० | ० |
| पित्तविदग्ध दृष्टि जहर | डेब्लाईन्डनेस हिमरा लोपिआ | Dayblindness or Hemaralopia |
| श्लेष्मविदग्ध | नाईटब्लाईन्डनेस निकटा लोपिआ | Night blindness Or Nictolopia |
| अर्म | टेरिजियम | Pterygium |
| शुक्तिका | ० | ० |
| नेत्रनाडी | ल्याक्रिमल फिस्च्युला | Lachrymal Fistula |
| लिङ्गनाश | क्याटर्‍याक्ट | Catract |
| अर्जुन, | ० | ० |

| | | |
|---|---|---|
| पिष्टक | ० | ० |
| सिराजाल | ० | ० |
| सिराज पिडिका | ० | ० |
| बलासग्रथित | ० | ० |
| पूयालस | ० | ० |
| श्लेष्मोपनाह | ० | ० |
| नेत्रस्राव | ० | ० |
| पूयस्राव | ० | ० |
| श्लेष्मस्राव | ० | ० |
| रक्तस्राव | ० | ० |
| पित्तस्राव | ० | ० |

| | | |
|---|---|---|
| पर्वणी | ० | ० |
| अलजी | ० | ० |
| क्रिमिग्रन्थि | प्यारेझाईटस् इनधी आई | Parasites in the eye |
| उत्सङ्गपिडिका | ० | ० |
| कुम्भीका | ० | ० |
| पोथकी | ० | ० |
| वर्त्मशर्करा | ० | ० |
| आर्शोवर्त्म | ग्रेन्युलरकन्जंक्टीवाईटिस् | Granular Conjunctivitis |
| शुष्कार्म | ० | ० |
| अञ्जननामिका | स्टाय | Stye |

| | | |
|---|---|---|
| बहुल्वर्त्म | ० | ० |
| वर्त्मबन्धक | ० | ० |
| क्लिष्टवर्त्म | ० | ० |
| वर्त्मकर्दम | ० | ० |
| श्यामवर्त्म | ० | ० |
| प्रक्लिन्नवर्त्म | ० | ० |
| अक्लिन्न० | ० | ० |
| वातहत | टोसीस | Ptosis |
| वर्त्मार्बुद | ० | ० |
| निमेष | ब्लेफेरोस्पाझम | Blepharospasm |
| शोणितार्श | ० | ० |

| | | |
|---|---|---|
| नक्षाण | ० | ० |
| विसवर्त्म | ० | ० |
| कुञ्चन | ० | ० |
| पक्ष्मकोप | ट्रीकियासिस | Trichiasis |
| उपपक्ष्मा | ० | ० |
| पक्ष्मशात | ठिनिया टारसाय | Tineæ Tarsi |
| शिरोरोग | ० | ० |
| सूर्यावर्त | ० | ० |
| अनन्तवात | ० | ० |
| अर्धावभेद | हेमिक्रेनिआ | Hemicrania |
| शिरःशूल | ० | Headache |

| | | |
|---|---|---|
| असृग्दर | मनोह्रेजिया | Menorrhagia |
| रक्तप्रदर | ल्युकोरिआ | Leucorrhea |
| श्वेतप्रदर | स्टेरिलिटि | Sterlity |
| वन्ध्यात्व | ० | ० |
| योनिव्यापत् | डिझीझीस आफ वेजायना | Diseases of Vagina |
| आर्तव | मेन्स्टुएशन | Menstruation |
| योनिकन्द | व्हेजायनल पालिपस् | Vagiual Polypus |
| गर्भस्राव | अबार्शन | Abortion |
| मूढगर्भ | डिफिकल्ट लेवर | Difficult labour |
| सूतिकारोग | परप्युरल फिवर | Perpural fever |
| स्तनरोग | म्यामरी इन्फ्लमेशन | Mammary inflammation |

| | | |
|---|---|---|
| स्तन्यदुष्टि | डिझीझ्डमिल्क | Diseases Milk |
| बालरोग | डीझीझीस् ओफधीचील्ड्रन | Diseases of children |
| कुकूणक | आफ्थलुण्डा इन चील्ड्रन | Ophthalunda in children |
| पारिगर्भिक | पार्यनिंग | Pining |
| तालुकण्टक | एल्ट्रेटस | Eltretas |
| महापद्मविसर्प | सेल्युलिट्स | Cellulits |

इति माधवोक्ताः रोगः ।

## अथाग्रेपरिशिष्ट रोगाः ।

| | | |
|---|---|---|
| स्नायुक | गीनिवर्म | Guineaworm |

| | | |
|---|---|---|
| फिरङ्ग | सिफीलीस | Syphilis |
| सोमरोग | डायेबिटिस | Diabetes |
| शीतला | स्मालपाक्स | Small pox |
| मधुरज्वर | टाईफाईड | Typhoid |
| जलसंत्रास | ० | ० |
| अण्डह्रास | ० | ० |
| नाभिभ्रंस | ० | ० |
| शुक्रदोश | ० | ० |
| आर्तवदोष | ० | ० |
| नपुंसकत्व | ० | ० |
| षण्डास्त्री | ० | ० |

| | | |
|---|---|---|
| क्लैब्य | ० | ० |
| आतपव्यापद् } अंशुघात | सनस्ट्रोक | Sunstroke |
| तत्त्वोन्माद | थिओमेनीआ | Theomania |
| तांडववात व्याधि | कीरिला | Chorea |
| स्नायुशूल | ० | ० |
| शीर्षाम्बु | ० | ० |
| आन्त्रिकज्वर | टाइफयेडफीवर | Typhoid fever |
| ग्रन्थिकज्वर | प्लेग | Plague fever |
| श्लेष्मकज्वर | इन्फ्लुयेन्ज़ा | Influenza Jever |
| सन्धिकज्वर | रियुमाटिक् फीवर | Rheumatic fever |

| | | |
|---|---|---|
| श्वसनकज्वर | न्युमोनिया | Pneumonia fever |
| आक्षेपकज्वर | सेरिब्रोस्पायिनल फीवर | Cerebro-Spinal fever |
| दण्डकज्वर | डेंगु फीवर | Dengue fever |
| कर्णमूलिकज्वर | मम्पस् | Mumps fever |
| कालज्वर | काला आजार-कामरूपीया | Kala-Azar fever |
| वातवलासकज्वर | बेरी बेरी फीवर | Beri-Beri fever |
| प्रलेपकज्वर | हेकटीक फीवर | Hectic fever |
| श्लैपदिकज्वर | फीलारीअल फीवर | Filarial fever |
| लघुमसूरिका | चिकेन पोक्स् | Chicken Pox |
| रोमान्तिका | मीज़ल्स् | Measles |

महताश्रमेण संग्रहीतोऽयं आतङ्कनिघण्टुः ।

| | | |
|---|---|---|
| श्वसनकज्वर | न्युमोनिया | Pneumonia fever |
| आक्षेपकज्वर | सेरिब्रोस्पायिनल फीवर | Cerebro-Spinal fever |
| दण्डकज्वर | डेंगु फीवर | Dengue fever |
| कर्णमूलिकज्वर | मम्पस् | Mumps fever |
| कालज्वर | काला आजार-कामरूपीया | Kala-Azar fever |
| वातवलासकज्वर | बेरी बेरी फीवर | Beri-Beri fever |
| प्रलेपकज्वर | हेक्टीक फीवर | Hectic fever |
| श्लैपदिकज्वर | फीलारीअल फीवर | Filarial fever |
| लघुमसूरिका | चिकेन पोक्स् | Chicken Pox |
| रोमान्तिका | मीज़ल्स् | Measles |

महताश्रमेण संग्रहीतोऽयं आतङ्कनिघण्टुः ।